# The Collection of Hindu Law Texts.

## Vol. XIX.

THE

# NÎTI MAYÛKHA

*( Sanskrit Text )*

A TREATISE ON
RULES OF POLITY

BY

BHATTA NÎLAKANTHA

EDITED BY

J. R. GHARPURE, B. A., LL. B., (Honours in
Pleader, High Court,
*Fellow of the University of Bombay,*
*Principal Law College, Poona*

First Edition.



1923.

धर्मशास्त्रग्रन्थमाला ( ग्रन्थाङ्कः १९ )

॥ श्री. ॥



भट्टनीलकण्ठकृतभगवन्तभास्करे

# नीतिमयूखः

## ( पञ्चमः )

स च

**जगन्नाथ रघुनाथ घारपुरे**, बी ए., एल्एल् बी.,
हायकोर्ट वकील, विश्वविद्यालयसदस्यः—मुंबई,

पुण्यपत्तनस्थव्यवहाराश्रमे मुख्याध्यापक ।

इत्यनेन संशोधित प्रकाशितश्च ।

प्रथमावृत्तिः

शकाब्दाः १८४६, क्रिस्ताब्दाः १९२५.

# उपोद्घातः ।

धर्मशास्त्रग्रन्थमालाया अद्य कोनविंशो ग्रन्थः प्रकाश्यते । श्रुतिस्मृतिपुराणेतिहासादिनिबन्धा बहवः प्रमाणग्रन्था सन्ति । तत्र बहुषु व्यवहारनिबन्धेषु सत्सु भट्ट-नीलकठस्य मयूखा आर्यदेशस्य पश्चिमभूभागे विशेषतस्तत्र च श्रीपरशुरामक्षेत्रे गुर्जरदेशे त्वतीव प्रामाण्यता गताः । राजशासनाधिकारिणोऽपि सामान्येन मिताक्षरामयूखावेव निर्णयेष्वाद्रियन्ते ।

तत्र भट्ट-नीलकण्ठस्थितिदेशकालबोधनाय श्रीकाशीक्षेत्रस्थविद्वच्छिरोमणि-'रानडे उपनामक-बालशास्त्री'-लिखितानुसारेण रावसाहेब विश्वनाथ नारायण मण्डलीकैस्तद्वंशो वर्णितः । स च तथैवात्र वर्ण्यते ।

"पुरा किल दक्षिणदेशे पैठणारण्यग्रामे गोविन्दभट्टो नाम महाविद्वांस्तपस्वी ब्राह्मणपुङ्गव आसीत् । तत्पुत्रो रामेश्वरभट्टनामा श्रीकाशीक्षेत्रं वासार्थं जगाम । तत्र च श्रीराममन्त्रेण सुचिरं भगवन्तं श्रीरामचन्द्रमुपासाञ्चक्रे । परिणतावस्थाया तस्य नारायणभट्टनामा पुत्रो बभूव । स बाल्यप्रभृति शान्त्यादिगुणसपन्नो महातपस्वी चाभवत् । तदानीमेव यवनैः श्रीविश्वेश्वरप्रासाद उत्सादितः । ततश्च कियता कालेन सर्वस्मिन्भारतवर्षेऽनावृष्टिरजायत । तदा सार्वभौमयवनैर्भट्टनारायणो वृष्ट्यर्थं प्रार्थितः । ततो नारायणभट्टेनाहोरात्राभ्यन्तरे वृष्टिर्भविष्यतीति प्रतिज्ञात तथैव सर्वपृथिव्या देवो ववर्ष । तेन सर्वं जगन्ननन्द । सार्वभौमयवनेभ्यो नारायणभट्टेन श्रीविश्वेश्वरप्रासादनिर्माणानुमतिर्याचिता सापि तैर्दत्ता । तदा तेन महाप्रासाद निर्माय श्रीविश्वेश्वरः प्रतिष्ठापितः । तत्तस्य लोकोत्तरं ब्रह्मवर्चसमालोच्यास्तिकजना सर्वे परमभक्तिप्रेमगद्गदा बभूवुः सर्वैश्च जगद्गुरुरिति महापदवी दत्ता तत्कुलीनानां चाग्रपूजानियमो विहित इतीय कथा श्रीकाशीक्षेत्रे सुप्रसिद्धा । नारायणभट्टस्य सर्वशास्त्रपारावारीणता त्रिस्थलीसेतुप्रयोगरत्नाद्यनेकग्रन्थनिर्मित्या जगत्प्रसिद्धा वर्तते । किंचाद्य यावत्तन्निर्मितग्रन्थैरेव श्रौतस्मार्तधर्मरक्षण जातमित्यपि सुप्रसिद्धम् । वक्ष्यमाणवंशक्रमो नारायणभट्टपुत्ररामकृष्णभट्टकृतज्योतिष्टोमपद्धतिग्रन्थे स्पष्टं लिखितस्तस्येमौ श्लोकौ—

श्रीमद्दाक्षिणदेशेऽगस्त्य इवासीत्स भट्टगोविन्दः ।
तत्सूनुः श्रीरामेश्वरभट्टोऽभूत्स सर्वविख्यातः ॥ १ ॥
तत्पुत्र श्रीनारायणभट्टो जयति सूर्यवद्भूमौ ।
तत्सूनू रामकृष्णभट्टो रामैकशरणता यातः ॥ २ ॥

गोविन्दभट्टरामेश्वरभट्टाभ्या निर्मिता ग्रन्थास्तज्जीवनसमयश्च साम्प्रत यथार्थतया नोपलभ्यन्ते । नारायणभट्टस्थितिसमयस्तु साक्षात्तद्धस्तलिखितपुस्तकस्थेभ्योऽङ्केभ्योऽवगम्यते । तत्रैकस्मिन्पुस्तके विक्रमार्के संवत् १६२४ इत्यङ्का लिखिता । पुस्तकान्तरे च

ऋषिबाणाब्धिभूगण्ये शाके ज्येष्ठे सिते रवौ
चतुर्दश्या विशाखासु ग्रन्थोऽन्तं समगादयम् ॥
भट्टरामेशपुत्रेण काशीपुर्यां यथामति ।
लिखितः सप्तमोऽध्यायो भाष्ये शबरसत्कृता ॥

इति श्लोकाभ्यामिमेऽङ्का (१४५७) दर्शिता । तस्यैव पुस्तकस्य द्वादशाध्यायसमाप्तिपत्रे सवत् १६१२ इत्यङ्का लिखिताः । नारायणभट्टस्य रामकृष्णभट्टशङ्करभट्टशर्माणौ महानिबन्धकारौ सकलशास्त्रपारीणौ द्वौ पुत्रावास्ताम् । तत्र रामकृष्णभट्टकृतग्रन्थेषु महाग्रन्थस्तन्त्रवार्तिकव्याख्या धर्मशास्त्रे तु जीवत्पितृकनिर्णयप्रभृतयो बहवो ग्रन्था सन्ति । शङ्करभट्टकृतग्रन्थेषु द्वैतनिर्णयाख्यो महाग्रन्थः सुप्रसिद्ध । मीमासायामपि कानिचित्प्रकरणान्युपलभ्यन्ते । द्वैतनिर्णयारम्भश्लोकाभ्यामेतन्निर्णीयते । तौ श्लोकौ यथा—

मीमासासरसीसरोजमकरन्दास्वादनैकव्रतो
हसः स्वीययशःसिताद्वयमतेरासीद्गुरूपाभिध. ।
वाग्देव्यागतमत्सरा श्रियमयं नित्यानुरक्तो भजन्
नो मुञ्चन्ननिमुक्तकं विजयते श्रीभट्टनारायणः ॥
विबुधानन्दसन्दोहहेतवे तत्तनूद्भवः ।
मीमासाद्वैतसाम्राज्यनीतिज्ञो भट्टशङ्करः ॥

शङ्करभट्टस्य पुत्रौ द्वौ । नीलकण्ठभट्टो दामोदरभट्टश्च । तत्राद्यो महानिबन्धकारो दानमयूखादीना द्वादशाना मयूखाना कर्ता । द्वितीयश्च द्वैतनिर्णयपरिशिष्टकार इति द्वैतनिर्णयस्थदत्ताप्रदानिकप्रकरणादवगम्यते । नीलकण्ठपुत्रः शङ्करभट्टस्तत्कृता व्रतार्कप्रभृतयो ग्रन्था द्वादशार्कान्तनामान उत्तमनिबन्धाः सन्ति । रामकृष्णभट्टस्य दिनकरभट्ट–कमलाकरभट्ट–लक्ष्मणभट्टाख्यास्त्रयः पुत्रा बभूवुस्तत्र दिनकरभट्टेन कृता उद्योतशान्तिसारादिग्रन्था प्रसिद्धा । दिनकरभट्टस्यैव क्वचिद्ग्रन्थे दिवाकरभट्ट इति नाम्ना व्यवहार । दिनकरभट्टस्य पुत्रो विश्वेश्वरभट्टस्तस्यैव गागाभट्ट इति नामान्तरम् । अनेन भट्टचिन्तामणिप्रभृतयो बहवो ग्रन्था. कृता । कमलाकरभट्टस्य निर्णयसिन्धुप्रभृतयो ग्रन्था बहुतरमेव प्रसिद्धा मान्याश्च सन्ति । तस्य च स्थितिसमयो निर्णयसिन्धुग्रन्थस्यान्तिमश्लोकेन स्पष्टीभवति । स तथा—

वसुऋतुऋतुभूमिते (१६६८) गतेऽब्दे नरपतिविक्रमतोऽथ याति रौद्रे ।
तपसि शिवतिथौ समापितोऽयं रघुपतिपादसरोरुहेऽर्पितश्च ॥ इति

कमलाकरस्य पुत्रोऽनन्तभट्टस्तेन श्रीरामकल्पद्रुमप्रभृतयः पद्धतिग्रन्था बहवः कृताः । लक्ष्मणभट्टनिर्मिता अप्याचाररत्नप्रभृतयो ग्रन्था प्रसिद्धा सन्ति । एवमग्रेऽप्यस्मिन्कुले महामहाविद्वासस्तपस्विनः सत्पुरुषा उत्पन्नास्तेषामपि कीर्तिर्दिगन्तेषु विख्याताऽस्ति । तेषा प्रदर्शनाय वंशवृक्षो लिखितस्तत्र ये साम्प्रत वर्तन्ते तेषा नामसु प्रथम श्रीशब्दः प्रयुक्त. ॥ ”


गोविन्दभट्ट
रामेश्वरभट्ट
नारायणभट्ट
रामकृष्ण
शङ्कर
नीलकण्ठ
दामोदर
दिनकर
कमलाकर
लक्ष्मण
शङ्कर
१ गागाभट्ट
विश्वेश्वर
अनन्त
प्रभाकर
श्यामभट्ट
रामभट्ट
दामोदर
गोविन्द
रामकृष्ण
जगन्नाथ
रघुनाथ
दिवाकर
अनन्तराम
सखाराम
वासुदेव
नारायण
श्रीरामेश्वर
लालाभट्ट
रामेश्वर
हरभट्ट
बाळभट्ट
राजाराम
राम
गोपाल
गोविन्द
लक्ष्मण
प्रभाकर
वैजनाथ
जगन्नाथ
विश्वनाथ
विश्वेश्वर
हरभट्ट
श्रीबाबाभट्ट
श्रीरामेश्वर
रामकृष्ण
नारायण
श्रीलक्ष्मण
जयराम
श्रीवैजनाथ
श्रीपुरुषोत्तम
श्रीगोपाल
श्रीछोटाभट्ट
श्रीनारायण
श्रीगोविन्द
श्रीगोपाल
दिनकर
श्रीवीरेश्वर
कमलाकर
श्रीसखाराम
आत्माराम
वेणीराम
श्रीगङ्गाराम
श्रीकृष्ण
श्रीराम
श्रीकान्तानाथ
श्रीअनन्त
श्रीसीताराम
श्रीहरिराम
श्रीबाळभट्ट

# उपोद्घातः ।

अत्र यानि पुस्तकानि यैश्च सुमनस्कतया प्रेषितानि तेषां नामादीनि संज्ञाश्च प्रकाश्यन्ते। तद्यथा

अ—डेक्कन कॉलेज संग्रहात्प्राप्त १३४ अनुक्रमाकेन चिह्नितम्

ब— ,, ,, १३५ ,, ,,

क— ,, ,, २९७ ,, ,,

घ— ,, ,, २३३ ,, ,,

ड— ,, ,, ८८ ,, ,,

ध— ,, ,, २९५ ,, ,,

न—सप्तपुरात् श्रीमद्वाळाचार्यगजेंद्रगडकर इत्येतै प्रेषित।

र—मुंबई रॉयल एशिआटिक सोसायटीत प्राप्तम् ।

इ—आनन्दाश्रमसंग्रहादानीतम्। २७१४ इत्यनुक्रमाकेन चिह्नितम्।

य—श्री सरदारबिवलकर इत्येतेषां संग्रहात्प्राप्तम् १६१ ,, ,,

क्ष—फर्ग्युसन कॉलेज मंडलीकविभागात्प्राप्तम् ।

ज्ञ—श्री वाराणस्यां शिलायां मुद्रित ।

परमुपकृत नो यैरेतानि दत्तानीति श।

जगन्नाथ रघुनाथ घारपुरे

5685



# विषयानुक्रमणिका ।

# ॥ अथ नीतिमयूखः प्रारभ्यते ॥

श्रीगणेशाय नमः । श्रीहरिः शरणम् ।

देवर्षिरक्षःसंघानामवाङ्मनसगोचरम् । प्रत्यक्षमपि तद्धाम सर्वदा समुपास्महे ॥ १ ॥
विरोधिमार्गद्वयदर्शनार्थं द्वेधा बभूवात्र परः पुमान्यः ।
श्रीशंकरो भट्ट इहैकरूपो मीमांसकाद्वैतमुरीचकार ॥ २ ॥
पितुः सौहित्यसंसिद्धिहेतुमुक्त्वाऽथ तत्सुतः । नीलकंठः प्रकुरुते राजनीतिं नृपाहृता ॥ ३ ॥

तत्र राजशब्दः क्षत्रियमात्रे शक्तो न राज्ययोगिनि । अभिषेकोत्तरभाविराज्ययोगात् प्रागपि राजानमभिषिंचेदित्यादेः शास्त्रीयप्रयोगस्य क्षत्रियमात्रेऽपि सद्भावादिति निरणायि द्वादशाधिकरणे । तस्य च विधिवदभिषिक्तस्य प्रजापालनं धर्म इत्याह मनुः ( ७।२ )

" ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि । सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणं ॥ "

ब्राह्मसंस्कारो ब्राह्मणैः कृतोऽभिषेकः । अभिषेकविधिश्च विष्णुधर्मोत्तरे

" इति संभृतसंभारो राज्ञः सांवत्सरस्ततः । कालेऽभिषेचनं कुर्यात्तं कालं कथयामि ते ॥ "

सांवत्सरो ज्योतिर्वित् । " मृते राज्ञि न कालस्य नियमोऽत्र विधीयते ॥
" तत्रास्य स्नपनं कार्यं विधिवत्तिलसर्षपैः । घोषयित्वा जयं चास्य सांवत्सरपुरोहितौ " ॥
" अन्यासनोपविष्टस्य दर्शयेतां जनं शनैः ॥
" स सांत्वयित्वा तु जनं मुक्त्वा बंधनगांस्ततः । अभयं घोषयित्वा तु कालाकांक्षी ततो भवेत् ॥ "

अत्र यदा पूर्वराजनि मृतेऽन्योऽभिषिच्यते तदाऽसौ तिलसर्षपस्नानाद्यभयघोषान्ते कृतेऽन्यासनस्थः प्रजाः पालयन्नभिषेककालमाकांक्षेत् । प्राप्तकाले चात्मानमभिषेचयेत् । यदा तु पूर्वराजनि जीवत्येव कारणांतरादन्योऽभिषिच्यते तदा कालप्रतीक्षांतमकृत्वा काल एवाभिषेकः कार्यः । तमेव कालमाह

" नाभिषेच्यो नृपश्चैत्रे नाधिमासे च भार्गव । न प्रसुप्ते तथा विष्णौ विशेषात्प्रावृषि द्विज ॥ "

प्रावृषो विशेषतो निषेधोऽतो तद्भिन्नविष्णुशयनकालाभ्यनुज्ञानार्थं ।

" न च भौमदिने राम चतुर्थ्यां च तथैव च । नवम्यां नाभिषेक्तव्यश्चतुर्दश्यां च भार्गव ॥
" ध्रुवाणि वैष्णवं शाक्रं दस्रपुष्यौ तथैव च । नक्षत्राणि प्रशस्यंते भूमिपालाभिषेचने ॥ "

वैष्णवं श्रवणं । शाक्रं ज्येष्ठा । दास्रमश्विनी ।

---

१ र–श्रीहरि , ज्ञ–श्रीहरिशरणम् टनईयरअछ–शरण, ब–नर्मदायै नमः । शरणं देवर्षि० । २ एतच्छ्लोकत्रयं क्ष–पुस्तके नास्ति । तत्र चतुर्दशश्लोका यथापूर्वं दत्ता । चतुर्दशम–श्लोकानन्तर ' तत्र राजशब्द ' इति प्रस्ताव । ३ अनरईकघयटकब–र्ण । ४ कब–इहैकरूपो । ५ कघअबनवयईट–सौहित्य । ६ ब खुना सूते । ७ घअनटईय–शास्त्रप्रयोगस्य ८ कघअबनटईयघर–ब्रह्मसंस्कारो । ९ कघरअनबटय–तु, घब–तु । १० बनघप–स्नापन । ११ घअबनईटय–तै । १२ कपईयटर–बन,प–भने । १३ घबन–घोषान्ते न्यासनस्थ । १४ बन–कांक्षिपेत् । १५ अरई–प्रतीक्षणांतमकृत्वा, टय–क्षण प्रकृत्वा, नघ–क्षण, ब–क्षणमकृत्वा । १६ अबनकघटयई–प्रवृषो । १७ अबनघटयई–जव

" कार्या पौरन्दरी शान्ति. प्रागेवास्य पुरोधसा "। पौरन्दरी ऐन्द्री। सा च वक्ष्यते
" प्राप्तेऽभिषेकदिवसे सोपवास. पुरोहित॰। सितमाल्योपवीतश्च सर्वाभरणभूषित ॥
" वेदिमुल्लिख्य मन्त्रेण हुत्वा च विधिवत्तत । शर्मवर्मगण चैव तथा स्वस्त्ययन गण ॥
" आयुष्यमभय चैव तथैव चापराजितम् "। एते पचगणा अग्रे वक्ष्यंते ।
" सपातवत कलश तथा कुर्याच्च काचनम् ।
" वन्हेर्दक्षिणपार्श्वस्थ श्वेतचदनभूषित । श्वेतानुलेपन स्रग्वी सर्वाभरणभूषितः ॥
" आसनस्थं सुख पश्येन्निमित्तानि हुताशने ।
" पश्येयुरन्ये च तथा नृसिहा दैवज्ञवाक्य निपुण च भूय ।
" सावत्सरस्याथ सदस्यमुख्यः सदस्यमुख्यस्य पुरोहितश्च ॥
" प्रदक्षिणावर्त्तशिखास्तदा जाबूनदप्रभ । रथौघमेघनिर्घोषो विधूमश्च हुताशनः ॥
" अनुलोमा॰ सुगधश्च स्वस्तिकाकारसन्निभ । वर्द्धमानाकृतिश्चैव नद्यावर्त्तनिभस्तथा ॥
स्वस्तिकं वर्द्धमान । नद्यावर्त्ता राजगृहभेदा ।
" प्रसन्नार्चिर्महाज्वाल स्फुलिगरहितो हि स । स्वाहावसाने ज्वलन स्वयदेवमुख हवि ॥
"यदा भुक्ते महाभाग तदा राज्ञा हित वदेत् । हविषश्च यदा वन्हौ न स्याच्छिमिशिमायित । "
शब्दानुकरणमात्रमेतत् ।
" न व्रजेयुश्च मध्येन मार्ज्जारमृगपक्षिण । पिपीलिकाश्च धर्मज्ञ तदा कुर्याज्जय नृपे ॥
" अग्रहारादिलाभे तु वन्हे राज्ञो जय वदेत् । तथैव च जय ब्रूयात्प्रस्तरस्याप्यदाहिनि ॥
" स्नान समारभेद्राज्ञो होमकाले पुरोहित । आदौ तु स्वेच्छया स्नात पुनर्ऋग्भिः समारभेत् ॥ "
ऋच प्रयोगे वक्ष्यते । पुनर्मृद्भिरिति क्वचित्पाठ ।
" पर्वताग्रमृदा तावन्मूर्द्धान शोधयेन्नृपः । वल्मीकाग्रमृदा कर्णौ वदन केशवालयात् ॥
" इन्द्रालयमृदा ग्रीवा हृदय तु नृपाजिरात् । करिदतो मृतमृदा दक्षिण तु तथा भुज ॥
" सरोमृदा तथा पृष्ठ उदर सगमान्मृदा । नदीकूलद्वयमृदा पार्श्वौ सशोधयेत्तथा ॥
" वेश्याद्वारमृदा राज्ञ कटिशौच विधीयते । यज्ञस्थानात्तथैवोरू गोस्थानाज्जानुनी तथा ॥
" अश्वस्थानात्तथा जघ राज्ञ सशोधयेद् बुध । रथचक्रोद्धृतमृदा तथैव चरणद्वय ॥
तथैव च करद्वयमिति क्वचित्पाठ । " मृत्पूत स्नानीय. स्यात्पचगव्यजलेन तु ।
" ततो भद्रासनगत मुख्यामात्यचतुष्टय । बलप्रवान भूपालमभिषिञ्चेद्यथाविधि ।
" पूर्वतो हेमकुम्भेन घृतपूर्णेन वाडव "॥ वाडवो विप्र । "दक्षिणे क्षीरपूर्णेन रौप्यकुम्भेन क्षत्रिय "॥
" दध्ना च ताम्रकुम्भेन वैश्य पश्चिमतो द्विज । माहेयेन जलेनोदक् शूद्रामात्योऽभिषेचयेत् ॥
माहेय गोशृगपुच्छसबधि ।
" ततोऽभिषेक नृपत बव्हृचप्रवरो द्विज । कौबेर्यां मधुना राम छन्दोगोऽथ कुशोदकैः ॥
" सपातवत कलश तथार्हत्य पुरोहित । विधाय वन्हिरक्षा तु सदस्येषु यथाविधि ॥

---

१ खगघरअ-सपातवत। २ करअइयट-स्था, घ-ञ-न-स्थौ। ३क्ष-घटयअञनघक-उदास्य मुख्य। पुरोहितश्च, ई-उदास्यमुख्याश्च पुरोहितश्च। ४ अकचईय-हित, खनईटय हित । ५ ख-न-णौ, घरअटय-बाधा। ६ कमअरन-इ-क्ष-र-प्यदाहिनि। ७ ई-माहियेन। ८ कघअखटय-हत्य ।

वन्हिं रक्षध्वमिति प्रेष्येत्यर्थ. ।

“ राजसूयाभिषेके तु ये मन्त्राः परिकीर्तिताः । तैस्तु दद्यान्महाभाग ब्राह्मणानां स्वरेण तु ॥

ते च मंत्रा प्रयोगे ज्ञेयाः ।

“ तत पुरोहितो गच्छेद्वेदिमूल तदैव तु । विभूषित तु राजान संस्थित भद्र आसने ॥ ”

भद्रासनलक्षण देवीपुराणे

“ हैम च राजत ताम्र क्षीरिवृक्षमय च वा । भद्रासन च कर्तव्य सार्द्धहस्तसमुच्छ्रितम् ॥

“ सपादहस्तमान च राज्ञो माडलिकातरात् ॥ ”

वराहसहितायां

“ त्रिविधस्तस्योच्छ्रायो हस्त पादाधिकोर्द्धयुक्तश्च । माडलिकानंतरजित्समस्तराज्यार्थिना शुभद ॥ ”

विष्णुधर्मोत्तरे

“ शतच्छिद्रेण पात्रेण सौवर्णेन यथाविधि । अभिषिचेत धर्मज्ञ. सम्यग्वेदविशारद ॥

“ या ओषधीरोषधिभि श्रुताभि. सुसमाहित । रथे तिष्ठेति गवैश्च आब्रह्मन् ब्राह्मणेति च ॥

“ बीजै पुष्पैस्तथासीने रामपुष्पवतीति च । तेनेव चैव मन्त्रेण फलैस्तमभिषेचयेत् ॥

“ आशु शिशान इत्येव सर्वरत्नैश्च भार्गव । ये देवा पुरः सदेति कुशाद्भि परिमार्जयेत् ॥

“ ऋग्वेदवित्ततो राज्ञो रोचनया यथाविधि । मूर्द्धान च तथा कठ गधद्वारेति संस्पृशेत् ॥

“ ततो ब्राह्मणमुख्याश्च क्षत्रियाश्च विशस्तथा । शूद्राश्चावरमुख्याश्च नानातीर्थसमुद्भवै ॥

“ नादेयै सारसै कौपैर्नानाकलशसस्थितै । चतु सागरजैर्भामाद्रलाभे द्विजकल्पितै ॥

“ गगायमुनयोश्चैव निर्झरैश्च तथाऽद्रिजे । छत्रपाणिर्भवेत्काश्चित्केचिच्चामरपाणय. ॥

“ अमात्यमुख्यास्तत्काल केचिद्वेत्रधरास्तथा ॥

“ शखभेरीनिनादेन बदिना निस्वनेन च । गीतवादित्रघोषेण द्विजकोलाहलेन च ॥

“ राजानमभिषिंचेयु. समेत्य सहिता जनाः । सर्वलोकाभिषिक्तस्य समिश्रजलसयुतं ॥

“ सर्वौषधियुत पुण्य सर्वगधयुत तथा । रत्नबीजसमायुक्त फलपुष्पसमन्वित ॥

“ पूजितं सितमूत्रेण वेष्टितग्रीवमेव च । श्वेतवस्त्रावकीतश्च संवीत शुचिभूषित ॥ ”

वस्त्रावकर्त्तश्चेति कचित्पाठ । बिल्वपत्रकुदादिपुष्पकमलाद्याकारतया कर्तितवस्त्रैरिति तदर्थ ॥

“ क्षीरवृक्षलनाव्यक्त सुदृढ काचन नव । आदाय कलश राज्ञ स्वय सावत्सरस्तदा ।

“ मत्रावसाने कलश दद्याद्भृगुकुलोद्वह ” । मत्रा अशीत्युत्तर शत वक्ष्यते सुरास्त्वामित्याद्याः ।

दद्यादभिषिचेत् ।

“ तत पश्येन्मुख राजा दर्पण वाऽथ सर्पिषि । सोष्णीष सितवस्त्रश्च मगलालभन तत ॥

“ तत सपूजयेद्विष्णु ब्राह्मणाश्च समर्चयेत् । राजा द्वौ चार्चयेत्तत्र सावत्सरपुरोहितौ ॥

“ मधुपर्केण धर्मज्ञस्ततस्तस्य स दैववित् । पट्टबध प्रकुर्वीत ततस्तस्य च बधनम् ॥”

पट्टलक्षण तु देवीपुराणे

“ सर्वस्नानमलकार रोचनाख्य च पट्टक । वृद्ध्या अगुलमगुल्याषड्त्रिंशत्मुलावधि ॥

---

१ अवकघनर-स्नान; ङ-सीम । २ अघबनरई-समेयु । ३ अबजघरटन-वेष्टितं । ४ ङ-कीं रघ-वकाश्चैव, इट-वकाश्चैव । ५ घन षड्विंशदगुल ।

" वृत्त वा चतुरस्र वा पद्मकत्रिकगर्भित । वत्सेशपद्ममत्स्येभगोस्वस्तिकविनायकै ॥
"श्रीश्रीवृक्षवराहेण स्वामिदेवीशुमान्वितम्" अष्टागुल । सप्तागुल एकागुल्या सहितमष्टागुलमित्यर्थः ।

तत आषड्विंशदगुल सप्तसप्तागुलवृद्धिर्वा तेनाष्टौ पञ्चदश द्वाविंशतिरेकोनत्रिंशत्षड्विंशत्यगुलानि दैर्घ्यं । दैर्घ्यार्द्धेन मध्ये विस्तारः । तदर्द्धेनातयोः । स च वृत्तायतश्चतुरस्रायतो वा । पद्मत्रिक पद्मत्रय । वत्स श्रीवत्स । ईश शिव । इभगोवृषदेहं गजमुखं । वराहेभोऽप्येव । केवलयोर्गजवृषयोर्विश्वकर्मणा निषेधात् । वाराह्यामपि मध्यविस्तारमुक्त्वा

" सर्वे द्विगुणायामा मध्यादर्द्धेन पार्श्वविस्तारा । सर्वे विशुद्धकाचनविनिर्मिता श्रेयसो वृद्ध्यै ॥
"पञ्चशिखो भूमिपतेस्त्रिशिखो युवराजराजमहिष्यो । एकशिख सैन्यपते प्रसादपट्टो विनाशिखया ॥

विश्वकर्माऽपि

" व्याघ्रव्यालगजा सिंहा अश्वोष्ट्रौ महिषो वृष । भूषणेषु त्यजेदष्टौ यदीच्छेद्दीर्घजीवित ॥
" वनेचरा जलचरा क्रिमिकीटपतगका । न तानाभरणे कुर्याद्यदीच्छेज्जीवित चिर ॥ "

एव पट्टबधानतर कार्यमुक्त विष्णुधर्मोत्तरे

" तत स बद्धमुकुट काले पूर्व मयोदिते । परार्द्ध्यास्तरणोपेते मचे बद्धोत्तरच्छदे ॥
" ध्रुवा द्यौरिति मन्त्रेण सोपवेश्य पुरोधसा । वृषस्य वृषदंशस्य द्वीपिनश्च भृगूद्वह ॥
" तेषामुपरि सिंहस्य व्याघ्रस्य च तत पर " । वृषदशो मार्जार । द्वीपी द्वीपातरगतो व्याघ्र इति तातचरणा । तरक्षुरिति केचित् । " तत्रोपविष्टस्य तदा प्रतीहार प्रदर्शयेत् ॥
" अमात्याश्च तत पौरान्नैगमाश्चापणेश्वरान् । तथा प्रकृतयश्चान्या यथावदनुपूर्वश ॥
" ततोऽप्रहारवस्त्रेभतुरंगकनकोत्तमै । गोजाविगृहदानैश्च सावत्सरपुरोहितौ ॥
" पूजयित्वा तत पश्चात्पूजयेद्ब्राह्मणत्रयं । अनेनैव विधानेन येन राजाऽभिषेचित ॥
" तत सदस्यान्सपूज्य सावत्सरपुरोधस । ततो ब्राह्मणमुख्याना पूजन तु समाचरेत् ॥
" गोवस्त्रतिलरूप्यान्नफलकाचनगोरसै । मोदकै श्वेतपुष्पैश्च महादानैश्च सुव्रत ॥
" मगलालभन कृत्वा गृहीत्वा सशर धनु । वन्हिं प्रदक्षिणीकृत्य प्रणिपत्य तथा गुरून् ॥
" पृष्ठतो वृषमालभ्य गा सवत्सा च पार्थिव । पूजयित्वा तु तुरग मंत्रित चाभिषेचित ॥
" तमारुह्य ततो नाग पूजयेच्चाभिषेचित । मन्त्रितं दक्षिणे कर्णे स्वयं दैवविदा ततः ॥
" आरुह्य राजमार्गेण स्वपुरं तु परिक्रमेत् । मुख्यामात्यै ससामतै सावत्सरपुरोहितै ॥
" सहित कुजरारूढैरभिगच्छेच्च देवता । तासा सपूजन कृत्वा नगर याति वेष्टित ॥
" प्रविश्यातर्गृह राजा प्रहृष्टनरवाहन । दानमानादिसत्कारैर्गृण्हीयात्प्रकृतीस्तत ॥
" सपूजिनास्ताश्च विसर्जयित्वा गृहे स्वके स्यान्मुदितो महात्मा ।
" विधानमेतत्समवाप्य राजा कृत्स्ना तु धात्रीं वशग विदध्यादिति "॥

सक्षेपस्तु गोपथब्राह्मणे "अथ राज्ञोऽभिषेकविधिं व्याख्यास्यामो बिल्वप्रभृतीन्सभारान्सभृत्य षोडश कलशान् षोडश बिल्वानि वल्मीकस्य च मृत्तिका सर्वान्न सर्वरसान्सर्वबीजानि । तत्र चत्वारः सौवर्णाश्चत्वारो राजताश्चत्वारस्ताम्राश्चत्वारो मृन्मयास्तान् ह्रदे सरसि वोर्ध्वस्रुतो नामैनाम इत्युदकेन पूरयित्वा वेदिपृष्ठे संस्थाप्य कुभे बिल्वमेकैक दद्यात्सर्वान्न सर्व-

१ ख्र–जग । २ अत प॰ ध–पुस्तकारम (५ पृष्ठात्) । ३ ङ–पार्थिव ४ घकनचदटय–देवविदा

रसान्सर्वबीजानि च प्रक्षिप्योभयैरपराजितैरायुष्यैः स्वस्त्ययनै सौवर्णेषु सपातान्स्रवाव्यै संसिक्तीयैश्च राजतेषु भैषज्यैरंहोमुचैस्ताम्रेषु सवेशसवर्म्याभ्यातातीयैः प्राणसूक्तेन च मृन्मयेषु ततस्तान् कलशान् गृहीत्वा स्तौत्रियै पवित्रियैरभिर्हुये राजानमभिषिंचेत् । भूमिमिंद्रिय च वर्द्धय क्षत्रिय म इति सिंहासनमारूढमभिमंत्रयेत् । एवमभिषिक्तस्तु रसान्प्राश्नीयाद्विप्रेभ्यश्च दद्याद्गोसहस्र सदस्येभ्य कर्त्रे ग्रामवर विपुल यशः प्राप्नोति भुक्ते धरा जितशत्रु सदा भवेदिति " ॥ अक्ष तडुलादि यदुप्त न प्ररोहति । बीजं प्ररोहार्हं व्रीह्यादि । ऊर्ध्व स्रुक् मुख येषा ते ऊर्ध्वस्रुत । नामैनाम अभयापराजिताद्या मत्रा प्रयोगे वक्ष्यन्ते । अत्र बहुवचने त्रयस्त्रयो ग्राह्या॰ कपिंजलन्यायात् । संवर्त्तसवेशप्राणसूक्तेष्वेकैक एवेति तातचरणा ।

## अथ प्रयोगः

तत्र यदा पूर्वराजनि मृतेऽन्योऽभिषिच्यते तदा सावत्सरपुरोहितौ त नित्यस्नानप्रकारेण तिलसर्षपै सस्नाप्य राष्ट्रेऽय राजेति तस्य जयमुद्घोष्य पूर्वराजासनादासनातर उपवेश्य मन्त्र्यादिकं नगरजनाश्च दर्शयेता । राजा च तान्सत्कृत्य कारागृहनिगडबद्धान् मुक्त्वाऽभय दत्वा तदासनस्थ एव राज्य कुर्वन्काल प्रतीक्षेत । प्राप्ते चाभिषेककाले आत्मानमभिषेचयेत् ।

पूर्वस्मिन्राजनि जीवति कारणांतरेणान्याभिषेके तु न कालप्रतीक्षातो विधि । किं त्वभिषेककालेऽभिषेक एव । अभिषेकदिनात्पूर्वमेत्र कस्मिश्चिच्छुभदिने पुरोधा ऐंद्रीं शाति कुर्यात् । सा चैव ।

## अथैंद्री शाति

पुरोधा सुदिने मासपक्षाद्युल्लिख्य करिष्यमाणराज्याभिषेकागतया ऐंद्रीशाति करिष्य इति सकल्प्य गणेशपूजास्वस्तिवाचनर्त्विग्वरणानि कुडलागुलीयकवासआदिभिस्तत्पजा च कुर्यात् । तत. अव्यसश्च व्यवसश्च विलबिष्यामि मायया । ताभ्यामुद्धृत्य वेदमथ कर्माणि कृण्महे । प्रयच्छ परशु त्वरया हरोष महिष त इति दात्र गृण्हाति[6] । ओषधीर्इातपर्वामिति मूलादुपरि बर्हिर्लुनाति । ॐ ग्रीष्मस्ते भूमे वर्षाणि शरद्धेमत शिशिरो वसत । ऋतवस्तविहिताहायनीरहोरात्रे पृथिवी नो दुहानामिति भुवमुपस्थाय । विमिमीष्व पयस्वर्तो घृताचीं देवान्य धेनुरपस्पृगेषा । इन्द्र सोमे पितुरक्षेमा अग्नि प्रस्तौतु विमृधानुदस्वेति द्वादशागुला शमीसमिधमनुमन्त्रयते । अथ वेदिः । सा च–षट्समिदायता पर्वपश्चिमयो । पश्चिमदिशि चतु समिद्विस्तारा पूर्वपश्चिमयो प्रत्येक समिद्द्वय त्यक्त्वा मध्यभागे दक्षिणोत्तरयो प्रत्येकमर्द्धसमित्त्यागेन समित्त्रयविस्ताराग्रे सनमनक्रमेण सार्द्धसमित्त्रयविस्तारा । तन्मध्ये पश्चिमत समित्त्रयं पूर्वतः समिन्मात्र त्यक्त्वा समिद्द्वयचतुरस्रा उत्तरवेदिः । सा च कुडात्मिका स्थडिलात्मिका वा । उत्तरवेदित. प्राच्या दक्षिणोत्तरयोश्च वेदितोर्द्धसमिन्मितैव भूमिस्तिष्ठति । तत ईशानकोणात्प्रदक्षिणक्रमेण वालुकया तूष्णीं महावदि सामरेखा कुर्यात् । तत ' ॐ बृहस्पते

---

१ ह्य भेषज्यवे । २ रई पुयैः, कघनबदयट–दुयै । ३ कखबटयअनरई–तत्र । ४ कखघअवयरईक्षटप–पूर्वमेकस्मिञ्छुभदिने । ५ अबकघमर–र्वा । ६ ध–मि । ७ ह्य–षा ।

परिगृहाण वेदिं सुगावो देवा सदनानि सतु । अस्या बर्हि प्रथता साध्वतराहिंस्राण पृथिवी देवी देव्यस्तु ' इति रेखा त्रिरनुमन्त्रयेत् । तत प्रथम महावेदिमध्ये । ' श्रीधारस्ते भूमे वर्षाणि शरद्धेमतः शिशिरो वसत । ऋतवस्ते विहायनीरहोरात्रे पृथवि नो दुहाना । यत्ते भूमे विखनामि क्षिप्र तदपि रोहतु । मा ते मर्मविमृग्वरिमा ते हृदयमार्पिष ' इति भूमिखनन । तत. ' ॐ यत्त ऊन तत्त आपूरयाति प्रजापति प्रथमजा ऋतस्येति ' खनितपूरण । तत ' ॐ त्वमस्या वपनीजनानामदितिः कामदुघापप्रथानेति ' बालुकाभिर्महावेदिं पूरयाति । पुन कुडात्मिका स्थण्डिलात्मिका वोत्तरवेदिं परिमाय पूर्ववद्रेखा कृत्वा ' बृहस्पते परिगृहाणेति ' मन्त्रेण त्रीन्वारान्सस्पृश्य पूर्ववदनुमन्त्रयेत् । ततः ' असबाध बध्यतो मानवाना यस्या उद्वत प्रवत सम बहु नानावीर्या ओषधीर्या बिभर्त्ति पृथिवी न प्रथता राध्यता नः' इत्युत्तरवेद्या वालुका विस्तारयाति । ततो ' यस्याश्चतस्र प्रदिश पृथिव्या यस्यामन्न कृष्टय सबभुवु । या बिभर्ति बहुधा प्राणदेजत्सा नो भूमिर्गोष्वप्यन्ये दधात्विति ' बालुकाभिर्वेदिं चतुरस्रां करोति । ततो ' देवस्य त्वा सवितु प्रसवेऽश्विनोर्बाहुभ्या पूष्णो हस्ताभ्या प्रसूत आङ्गिरसा परिगृह्णामी'त्यनेन लेखनीं गृह्णाति । ततः ' इद्र. सीता निगृह्णातु ता पूषाऽभिरक्षतु । सा न पयस्वती दुहामुत्तरामुत्तरा समामि'त्युत्तरवेद्या आग्नेयकोणादारभ्य वामावर्तेन चतुर्दिक्षु लेखा कृ त्वा पुनरप्याग्नेयकोणादारभ्य ईशानकोणपर्यंत पूर्वेत उल्लिख्य तन्मध्येऽपि पूर्वाग्रास्तिस्रो लेखा करोति । अथ तस्या व्रीहियवौ तूष्णीं विकीर्य ' वेषेण भूमि पृथिवी वृता वृता । सा नो दधातु भद्रया प्रिये धामनि ' इत्यनेन सम्प्रोक्ष्य ' ॐ यस्यामन्न व्रीहयवौ यस्या इमा पचकृष्टय । भूम्यै पर्जन्यपत्न्यै नमोऽस्तु वर्षमेदसे ' इति भुव नत्वा ' ॐ त्वामग्ने भगवो निषत्तामाङ्गिरस सदनश्रेय एव हि । विश्वकर्मा पुर एतु प्रजान विश्वच पथानमनु त दिशास्ते । भद्र पथामनुते दिशाम । श्रेय पथामनु ते दिशाम । स्वस्ति पथामनु ते दिशाम ' इत्यग्निसनिधापन । ततो ' भद्रा भव श्रेयो भव स्वस्त्यो भवेति ' व्रीहियवौ कास्यादिपात्रस्थ एवाग्नौ प्रक्षिप्य ' ॐ विश्वभरा वसुधीनी प्रतिष्ठा हिर ण्यवक्षा जगतो निवेशनी । वैश्वानर बिभ्रती भूमिरग्निमिंद्रऋषभा द्रविणे नो दधात्वि'त्युत्तरवेद्यामग्निं स्थापयति । 'ममाग्ने वर्चो वि हवेष्वस्तु वयत्वेधानास्तन्व पुषेम । मत्य नमंता प्रदिशश्चतस्रस्त्वयाऽध्यक्षेण पृतना जयमेति ' समिन्त्रय जुहुयात् । एव व्रतग्रहणात् कृत्वा ' तेन त्वा व्रतपत ' इत्येका समिध स्वाहाकारवर्ज हुत्वाऽग्नेरीशानभागे सौवर्ण रौप्य ताम्र वा जलपूर्ण गधसर्वौषधिदूर्वापचपल्लवपचत्वक्पचगव्यपंचामृतसप्तमृत्तिकापुष्पफलपचरत्नसुवर्णो शकलवासोयुत कलशमक्षतेषु सस्थाप्य तदुपरि अग्ने पुरस्ताद्गोचर्ममात्र गोमयेनोपलिप्य तदहतेनोदग्दशेन वाससा सछाद्य तदुपर्यष्टदल पद्ममालिख्य तत्र वा पलनदर्द्धतदर्द्धसुवर्णनिर्मितमिंद्रं संस्थाप्य राजोपचारैः पूजयेत् । तत्रेमा आप इति स्नान । मधुपर्ककुडलागुलीयकाद्याभरणछत्रचामरध्वजपताकादीन्यर्पयेत् । त्रातारमिंद्रमिति पुष्पांजलि । ततस्तूष्णीं पवित्रे कृत्वा विष्णोर्मनसा पूते स्थ इति प्रथम पवित्राभ्यामिध्मप्रोक्षण विष्णोर्मनसा पूतमसीति द्वितीयम् ।

---

१ कथनअवरध—पृथिवीदेव्यस्तु । २ अवस्थघन—सर्पिष ।

देवस्त्वा सवितोत्पुनात्वच्छिद्रेण त्वा पवित्रेण शतधारेण सहस्रधारेण सुतोत्पुनामीति तृतीय । चतुर्थं तूष्णीं । अग्नये त्वा जुष्ट प्रोक्षामीत्यनेनेध्मसनिधापन । अथेध्ममादाय 'ॐअग्निर्भूम्यामोषधीष्वग्निमापो बिभ्रत्यग्निरश्मसु । अग्निरत. पुरुषेषु गोष्वश्वेष्वग्नय. ॥१॥ अग्निर्दिव्य आपतत्यग्नेर्देवस्योर्वंतरिक्ष । अग्निमर्त्तास इधते हव्यवाह घृतप्रिय ॥ २ ॥ अग्निवासा' पृथिव्यसितज्ञौस्त्विषीमत सशितमाकृणोतु । भूम्या देवेभ्यो ददाति यज्ञ हव्यमरकृत । भूम्या मनुष्या जीवति स्वयं यान्नेन मर्त्या । सा नो भूमि प्राणमायुर्दधातु जरदष्टि पृथिवीमाकृणोतु ॥ ३ ॥ एतमिध्मं समाहित जुषाणो अग्ने प्रतिहर्यहोमै । तस्मिन्विधेम सुमतिं स्वस्तिं प्रजा चक्षु. पशून् समिद्धे जातवेदसि ब्रह्मणे. ॥ ४ ॥ अस्मै क्षत्राणि धारयातमग्ने युनज्मि त्वा ब्रह्मण त्वा दैव्येन । दीदित्यस्मभ्यं द्राविणेह भद्रं प्रेम वोचोहविर्द्धां देवतासु ॥ ५ ॥ एभि पंचभिर्मंत्रैर्जुहोति । तत. त्व भूमिमन्वेष्योजसा त्वं वेद्यां सीदासि चारुरध्वरे । त्वा पवित्रमृषयो भरतस्व पुनीहि दुरितान्यस्मिन्निति बर्हि प्रोक्षण । तत. ऋषीणा प्रस्तरोऽसि नमोऽस्तु दैवाय प्रस्तरायेति दक्षिणतो ब्रह्मासन निदधाति । ततोऽस्मिन्कर्मणि त्व भूपते भुवनपते भुवा पते महतो भतस्य पते ब्रह्माण त्वा वृणीमहे इति वरणमत्र ब्रह्माणमुद्दिश्य कर्त्ता पठति । तत' अहं भूपतिरह भुवनपतिरह भुवा पतिरह महतो भुतस्य पतिस्तदह मनसे प्रब्रवीमि मनो वाचे वाग्गायत्री गायत्र्युष्णिह उष्णिगनुष्टुभे अनुष्टुब्बृहत्यै बृहती पङ्क्तये पङ्क्तिस्त्रिष्टुभे त्रिष्टुब्जगत्यै जगती प्रजापतये प्रजापति विश्वेभ्यो देवेभ्य ॐ भूर्भुव स्वर्जनर्दो इति ब्रह्मा जपति । तत. ॐ अह वैधिषव्योदतास्तिष्ठान्यस्य सदने सीदयोस्मत्पाकतर इति ब्रह्मा स्वासनमन्वीक्षते । ॐ निरस्त' परावसु. सह पाप्मना निरस्त. सोऽस्तु योऽस्मान् द्वेष्टि य च वय द्विष्म इति ब्रह्मासनाद्दक्षिणे तृणं निरस्यति । अथासनमालभ्य जपति इदमहमर्वावसोः सदने सीताम्यृतस्य सदने सीदामि सत्यस्य सदने सीदामीष्टस्य सदने सीदामि पूर्तस्य सदने सीदामि मामृषदेवबर्हि.स्वासस्थत्वाध्यासदेयं तूर्णमृद्मनभिशोकं विमृग्वरीं पृथिवीमावदामि क्षमा भूमि ब्रह्मणा वावृधाना । उर्ज्जं पुष्टिं बिभ्रतीमन्नभाग घृत स्वाभिनिषीदेव भूमे । अथोपविश्यासने ब्रह्मा जपति । बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते बृहस्पते यज्ञ गोपाय । तत य उक्त अविवतः शक्रेय यातम द्यावापृथिवी था न इति द्यावापृथिव्यौ समीक्षते । अथ होता बर्हिर्मुष्टिमादायस्तृणानि त्रीन्वारानाग्नेये त्रीन् दक्षिणत त्रीन्पश्चिमाया सकलास्त्रीन् वायव्ये पूर्वतो मूलानि छादयस्त्रीनुत्तरतस्त्रीनीशाने यत्र समागच्छति तद्दक्षिणोत्तर करोति । इति भाष्यम् । ब्रह्मा च पेगि देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्या पूष्णो हस्ताभ्या प्रसून प्रशिषा परिस्तृणामि इति पठित्वा आग्नेयकोणादीशानपर्यन्त पङ्क्तित्रयं पूर्वाग्रान् दर्भानास्तृणाति । एव प्रथमास्तृतदर्भाग्राच्छादितमूलानुत्तरतो दर्भानास्तीर्य निर्ऋतिकोणादारभ्य पूर्ववत्पङ्क्तित्रयेण प्रागग्रानाग्नेयपर्यन्त तथैव निर्ऋतिकोणादारभ्य वायव्यपर्यन्त तथैव वायव्यकोणादारभ्य प्रागैशानपर्यंत परिस्तीर्य चरम ईशानपरिस्तीर्णदर्भाग्रान् प्रथमत ईशानपरिस्तृतदर्भाग्राणा अध. स्थापयेत् । तत. हविषा त्वा जुष्ट प्रोक्षामीत्यनेनास्तीर्णदर्भाभ्युक्षणं । अथ होता आस्तीर्णदर्भमध्ये काश्चिद्दर्भानादाय तान्स्वासने समास्तीर्य अहैवैधिषव्य इत्येनन स्वासनमन्वीक्षते । निरस्त इत्यादिना तृण निरस्यति । आसनमालभ्य इदमहमित्यादि जपति । उपविश्य बृहस्पतिर्ब्रह्मेत्यादि जपति । परि त्वाग्ने पुरं वयं विप्र सहस्य धीमहि ।

---

१ य-न-थ-श्राह्मणा, अयवई ब्रह्मणा । २ झ-चापरि । ३ झ-प्रागप्रातामेय । ५ अयटघन-स्व ।

धृषद्वर्णं दिवे दिवे हतार भंगुरावतः इति उपह्नत इत्याविना द्यावापृथिव्यौ समीक्षते । ॐ यथाग्ने ब्रह्मणस्पति सत्यधर्मा अदीवरद्देवस्य सवितुः सव इत्युदपात्रमग्नेरुत्तरत स्थापयति । तत्र च पवित्रे निक्षिप्य ॐ इहेत देवीरमृत वसाना हिरण्यवर्णा ओनवद्य स्वयाः । आपः समुद्रो वरुणश्च राजा सपातभागान्हविषो जुषंता । इंद्रप्रशिष्टा वरुणप्रसूता आप. समुद्रादिषमुद्वहतु । इन्द्रप्राशिष्टा वरुणप्रसुता दिवस्पृथिव्याः श्रियमावहतु ॥ अनेन मत्रेणोदपात्रे उदकं क्षिपति । विलीनपूतमाज्यमग्नावधिश्रित्य परि त्वाअग्ने पुर वयं विप्र सहस्य धीमहि । धृषद्वर्णं दिवे दिवे हतार भगुरावत इति त्रिः पर्यग्नि कृत्वा उदगुद्वास्य पश्चादग्नेरासाद्य पवित्राभ्यामुत्पुनाति। तता दर्भत्रयेण स्रुवसमाजन । ततो निष्टप्त रक्षोनिष्टप्ता अरातय. इति स्रुवमतपन । अथ ॐ विष्णोर्हस्तोऽसि दक्षिणः पूष्णो दत्त बहस्पते । त त्वाऽह स्रुवमाददे देवाना हव्यवाहनं । अयं स्रवो निदधाति होमाच्छताज्जरच्छंदसाजागतेन । सर्वंयज्ञस्य समनक्ति विष्टा बार्हस्पत्येन शर्मणा दैव्येनेति । स्रुवाभिमत्रण । तत ससकृतमेव घृत स्ववामभागेऽग्ने पश्चात्स्थापिताज्यवानीनामकपात्रातरे स्रुवेण कुर्यात् 'ॐ भू श भूत्यै त्वा गृह्ले भूतये' इति प्रथम गृह्णाति । ॐ भुवः श पुष्ट्यै त्वा गृह्ले पुष्टये इति द्वितीय । ॐ स्व श त्वा गृह्ले सहस्रपोषाय इति तृतीय । ॐ जन श त्वा गृण्हे परिमितपोषायेति चतुर्थं । तत स्रुवेण तत् घृतं जुहुयात् । अग्नावग्निश्चरति प्रविष्ट ऋषीणा पुत्रो अभिशस्ति पाउ । नमस्कारेण नमसा ते जुहोमिमा देवाना मिथुया कर्म भाग स्वाहा । हृदा पूत मनसा जातवेदो विश्वानि देव वयुनानि विद्वान् । सप्तास्यानि तव जातवेदस्तेभ्यो जुहोमि सजुषस्व हव्य स्वाहा । पुरस्ताद्युक्तो वह जातवेदोऽग्ने विद्धि क्रियमाण यथेद । त्वं भिषग्भेषजस्यासि कर्ता त्वया गामश्व पुरुष सनेम स्वाहा । यज्ञस्य चक्षुः प्रतिमुख च वाचा श्रोत्रेण मनसा जुहोति । इम यज्ञ वितत विश्वकर्मणा देवा यतु समनस्यमानाः स्वाहा । इति हुत्वा ॐ वृष्णे बृहते स्वर्विदे अग्नये शुक्र हरामि त्विषीमते । स न स्थिरान्बलवत· कृणोतु ज्योक्चरो जीवातवेत्य ददात्वमग्नये स्वाहा । इत्युत्तरपूर्वार्द्धे । अथ दक्षिणपूर्वार्द्धे । ॐ त्व सोमाद्रिभ्यो नृचक्षा सुग अस्मभ्य पथो अनुक्ष । अभिनो गोत्र विदुष इव नेशोच्छानोवाचमुशती जिगाय सोमाय स्वाहा । इत्याज्यभागो हुत्वा अभ्यातानहोमं कुर्यात् । तद्यथा सविता प्रसवानामधिपति समावतु अस्मिन् ब्रह्मण्यस्मिन्कर्मण्यस्यां पुरोधायामस्या प्रतिष्ठायामस्या वित्यामस्यामाहूत्यामाशिष्ट्यस्या देवहुत्या स्वाहा । सवित्रे प्रसवानामधि पतये । अग्निर्वनस्पतीनामधिपतिः। इत्यादिपूर्ववत २ । एव सर्वत्राप्यग्रे । द्यावापृथिवी दातॄणामधिपती। ३ वरुणोऽपामधिपति ४ । मित्रावरुणौ वृष्ट्या अधिपती ५ । मरुत पर्वतानामधिपतयस्ते मावतु ६ । सोमो वीरुधामधिपति ० ७। वायुरतरिक्षस्याधिपति ८ । सूर्यश्चक्षुषामधिपति' । ९ । चंद्रमा नक्षत्राणामधिपति' १० । इंद्रो दिवोधिपति. ११ । मरुता पिठापशूनामधिपतिः १२ । मृत्युः प्रजानामधिपति. १३ । यम पितॄणामधिपति' १४ । तत अवतरेतेमावंत्विति पूर्ववत् १५ । ततस्त तामहास्तेमावंत्विति पूर्ववत् ॥ **अथोत्तरांगानि** ॥ तत्र पूर्ववत्सप्तदशाहुत्यात्मकं अभ्यातानहोमं

---

१ कथनधअ—अनवद्य । २ कथनअब--स्वया, ध त्वया । ३ ह्न—ण । ४ घत्रयडबद—पितर स्तेमा वंत्विति

कृत्वा शुक्लपक्षश्चेत् पूर्णा पश्चात्तुत पूर्णा पुरस्तादुन्मध्यत. पौर्णमासी जिगाय। तस्यां देवौ संवसतो महित्वा नाकस्य पृष्ठे समिषा मदेम स्वाहेति जुहोति। कृष्णपक्षश्चेत् यत्ते देवा अकृण्वत् भागधेयममावास्ये संवसतो महित्वा। तेनो यज्ञ पिपृहि विश्ववारे रयिं नो धेहि सुभगे सुवीरं स्वाहा। अथ आहूत्यै स्वाहा। कामाय त्वा स्वाहा। समृधे त्वा स्वाहा। आहूत्यै त्वा कामाय त्वा समृधे त्वा स्वाहा। ऋचास्तोमं समर्धय गायत्रेण रथतरं। बृहद्गायत्रवर्तनि स्वाहा। इत्याहुतिपञ्चकं जुहुयात्। इति समृद्धिहोमः॥ततः ॐ पृथिव्यामग्नये समनमन्त्स आर्ध्नोत्। यथा पृथिव्याम्ग्नये समनमन्ने वा मह्यं सन्नमः स नमंतु। ततः पृथिवी धेनुस्तस्या अग्निर्वत्सः समेऽग्निना वत्सेनेषमूर्जं काम दुहा। आयुः प्रथम प्रजा पोष रयिं स्वाहा। अंतरिक्षे वायवे समनमन्त्स आर्ध्नोत्। यथांतरिक्षे वायवे समनमन्नेवा मह्यं सन्नम संनमतु। अंतरिक्षं धेनुस्तस्या वायुर्वत्स. सामे वायुना वत्सेनेषमूर्जं काम दुहां। आयु प्रथम प्रजा पोष रयिं स्वाहा। दिव्यादित्याय समनमत्स आर्ध्नोत् यथा दिव्यादित्याय समनमन्ने वा मह्य सन्नम सनमंतु। द्यौर्धेनुस्तस्या आदित्यो वत्स साम आदित्येन वत्सेनेषमूर्जं काम दुहा। आयुः प्रथम प्रजापोष रयिं स्वाहा। दिक्षु चद्राय समनमत्स आर्ध्नोत्। यथा-दिक्षु चद्राय समनमन्नेवामह्यं सन्नम सन्नमतु। दिशो धेनुवत्सा सा चद्रो वत्स तामे चद्रेण वत्सेनेषमूर्जं कामं दुहा आयु प्रथम प्रजापोष रयिं स्वाहा। इत्याहुतिचतुष्टय सनतिहोमः। प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिभूर्जजान। यत्कामास्ते जुहुमस्तन्नो अस्तु वय स्याम पतयो रयीणा स्वाहा। इत्युपस्तीर्थहोम.। ततोऽग्नेरुत्तरपूर्वार्धे आदेवानामपि पथामगन्म यच्छक्नवाम तदनु प्रवो ढु। अग्निर्विद्वान्स यजात्स इद्धो तासोऽध्वरान्सऋतून्कल्पयात्यग्नये स्विष्टकृते स्वाहा इति मन्त्रेण जुहुयादिति स्विष्टकृत्। अथैकादशप्रायश्चित्ताहुतीः स्वाहेष्टेभ्य स्वाहा। वर्षणिष्टेभ्य स्वाहा। भेषज स्विष्ट्यै स्वाहा। निष्कुतिर्दुरिष्ट्यै स्वाहा। दैवीभ्यस्तनूभ्यः स्वाहा। अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्वमया असि। अयासमनसाकृतोयासन् हव्यमूहिष स्वाहा। ॐ स्वाहा भूः स्वाहा भुव स्वाहा स्व. स्वाहा ॐ भूर्भव स्व स्वाहेति प्रतिप्रायश्चितहोम। तत यन्मे स्कन्नमनसो जातवेदो यद्वा स्कदेद्धविषो यत्र यत्र। उत्प्रुषो विप्रुषः सर्जुहोमि सत्या. संतु यजमानस्य कामा स्वाहेति स्कन्नहोमः। यदस्मृति चकृम किंचिदग्न उपारिम-चरणे जातवेद। तत. मांहि त्व ततः प्रचेत सुर्श्मे सखिभ्यो य अमृतत्वमस्तुत स्वाहा। इत्यस्मृतिहोमः॥ ततः यद्व्यत्वा प्रयति यज्ञे अस्मिन्होताश्चिकित्वन्नवृणी महीहा ध्रुवमया ध्रुव हुताशविष्ठ प्रतान्यज्ञमुपयाहि सोम स्वाहा। समिद्धणो मनसा नेष गोभि ससूरिभिर्हरि-वत्सस्वस्त्या। सब्रह्मणा देवहित यदस्ति सदेवाना सुमतौ यज्ञियाना स्वाहा। यानावह उशतो देवदेवास्तान्प्रेरय स्वे अग्ने सधस्थे। यक्षिवास यथिवांसो मधून्यस्मै धत्त वसवो वसूनि स्वाहा। सुगावो देवाः सदना अकर्म्म य आजग्म सवथ ने माजुषाणः। वहमाणा भरमाणाः स्वा वसूनि वसु घर्मं दिवमारोहता नु स्वाहा। यज्ञ यज्ञ गच्छ यज्ञपतिं गच्छ। स्वा योनिं गच्छ स्वाहा। एष ते यज्ञो यज्ञपते सह सूक्तवाकः सुवीर्यः स्वाहा। वषट्कृतेभ्यो वषड्-हुतेभ्य। देवा गातु विदो गातुं वित्वा गातुमितस्वाहा। इत्याहुतिसप्तक सांस्थितिहोम॥

---

१ ह्ल-वत्सेषमूर्जं। २ ईअचटय-पैजान, ब-बीजात। ३ अईटय- प्रवोढ्। ४ ह्ल-पाठ। ५ अवनकचटयई-यद्वस्वीदद्धविषो। ६ अवनकट-संजुहोति। ७ ह्ल-याहि। ८ ह्ल-सुमे। ९ ह्ल-पे। १० ह्ल-पथिवांसो।

तत समनस्पत इम नो दिवि देवेषु यज्ञ स्वाहा। दिवि स्वाहा। पृथिव्या स्वाहा। अंतरिक्षे स्वाहा। वतेधा स्वाहेत्याहुतिपचकं हुत्वा आज्यस्थालीघृतमुत्तम चतुर्वारं स्रुवेण गृहीत्वा आज्यधान्या सस्थाप्य स्रुवेणैकवार तूष्णीं जुहुयात्॥ इति **समानहोम** ॥ अथस्तरणक्रमेण बर्हिरुत्थाप्य त्रिगुणीकृत्याज्यधान्या घृतेनाभ्यनक्ति। पृथिव्यै त्वेति मत्रं प्रथमं मूले युनक्ति । अतरिक्षाय त्वेति मध्य युनक्ति। दिवे त्वा इत्यग्र युनक्ति। एवं त्रिः कृत्वा ॐ सबर्हिरक्त हविषा घृतेन समिन्द्रेण वसुना समरुद्भि । स देवैर्विश्वदेवेभिरक्तमिंद्र गच्छतु बर्हि स्वाहेत्यनेन बर्हिर्जुहोति। अथ सस्रावभागास्तविषा बृहंत । प्रस्तरेष्ठा बर्हिषदश्च देवा॰। इमे यज्ञमभिविश्वे गृणंत स्वाहा। देवा अमृता मादयंता स्वाहा। इति **सस्रावभागहोम** ॥ स्रुवोसीति स्रुव प्राग्दड निदधाति । स्रुवमाति ष्ठापनान्ते इद्र चदनपुष्पधूपदीपनेवेद्यताबूलदक्षिणाभि पूजयेत्। त्रातारमिंद्रेति पुष्पाजलिं दद्यात्। ततोऽग्न्यायतनस्य समताद्दिक्षु विदिक्षु च माषभक्तबलीन्सदीपान् दिक्पालेभ्यो प्रदद्यात्। त्रातारमिन्द्रमिति इन्द्राय सागाय सपरिवाराय सायुधाय सशक्तिकाय एष माषभक्तबलिर्नम । भो इद्र दिश रक्ष बलिं भक्ष यजमानस्यायु कर्ता क्षेमकर्ता शुभकर्ता शातिकर्ता भवेति प्रार्थयेत्। एवं सर्वत्र। अग्नेर्मन्त्रे इत्याग्नेये। यममत्रेण याम्ये। नमोस्तु ते निर्ऋत इति नैर्ऋत्ये। ये पश्चादिति पश्चिमे। वायो, सवितुरिति वायव्ये। य उतरतस्ते इत्युत्तरे। ईशाना त्वा ईशाने। इति दिक्पालेभ्यो बलिं दद्यात्। ततो महाबलि कुकुमादिरक्त रक्तपुष्पादियुत सदीप सदक्षिण क्षेत्रपालाय दद्यात्। क्षेत्रियात्त्वाक्षेत्रस्य पतिमाक्षेत्रपालाय भूतप्रेतपिशाचराक्षसशाकिनीडाकिनीवेतालादिपरिवारयुतायेत्यादि इम बलि शूद्रेण दुर्ब्राह्मणेन वा चतुष्पथे वाऽन्यत्र नापयेत्। ततः प्रक्षालितपाणिपाद आचातो देशकालौ स्मृत्वा कृताया ऐंद्रा शाते **पूर्णता**सिद्ध्यर्थं पूर्णाहुति होष्यामीति सकल्य स्रुचिद्वादशगृहीत चतुर्गृहीत वाऽऽज्य कृत्वा वस्त्रयुतनालिकेरादिफलचदनादियुत तदुपरि निधाय पूर्णाहुति अभिभूर्यज्ञ इत्येतैस्त्रिभि सक्त राज्ञान्वारब्धो हुत्वा कर्मशेष समापयेदाचार्य । विमुचामीत्यादि समित्रयहोम[1] । तेजोऽसीति मुख विमार्ष्टि । दक्षिणेनाग्नि त्रीन्विष्णुक्रमान् क्रमते विष्णो क्रमोसीति। सूर्यस्यावृतामित्यभिदक्षिणमावर्तते। अगन्मस्वरित्यादित्यमीक्षेत। इद्रनय वसावयमिद्रस्य वरुणस्य च। ब्रह्मणा स्थापितपात्र पुनरुत्थापयामासि। अपरेणाग्निमुद्पात्र परिहृत्योत्तरेणाग्नि आपा हि ष्ठा मयो भुव इति मार्जयित्वा बर्हिषि पत्न्यजलौ निनयति 'समुद्रं व प्रहिणोमीति'। वीरपत्न्यह भूयास यदा यजमानस्तदा वीरपुरुषोऽह भूयासमिति मुख निमार्ष्टि । व्रतानि व्रतपत इति समिधमादधाति। सत्य त्वर्तेनेति सह हविर्भि पर्युक्ष्य उदचि हविरुच्छिष्टान्युद्वासयति। पूर्णपात्र दक्षिणा । ब्रह्मोत्थापन । उत्तिष्ठ ब्रह्मणस्पत इति। यस्मात्कोशादिति नमस्कार.। ततः कलशोदकेन शात्युदकेन च दूर्वापल्लवैरुदङ्मुख आचार्य ऋत्विजश्च तिष्ठत. प्राङ्मुख सकुटुबमुपविष्ट राजानमभिषिचेयु'। अभिषेके पत्नी वामभागे । पवित्रं शतधारं । प्रयतेतः पापिलक्ष्मीति चतस्र । हिरण्यवर्णाः। एवमभिषेकानन्तर सर्वौषधीभिरनुलिप्य शुद्धोदकेन स्नात्वा परिधत्ते वाससी परिधाय शुक्लमाल्याबरानुलेपन सपत्नीको यजमान आचार्यादीन् सपूज्य तेभ्यो दक्षिणा दद्यात्।

---

1 ह्र—सस्रवभाग।

" ब्राह्मणो दश गा दद्यादनड्वाह ततोऽधिक । सीराधिक ततो वैश्यस्तथा प्रादेशिको हय ॥
" राजा दद्याद्वर ग्राम समूहो संशोवित्तथा । यथोक्ता दक्षिणा दद्यात्सकल फलमश्नुते ॥

अथेत्यादिसमयमुच्चार्य कृतस्य ऐंद्रशात्याख्यकर्मण. प्रतिष्ठासिध्यर्थं एकादशधेनू रुद्रदेवत्या अमुकगोत्राय ब्राह्मणाय तुभ्यमहं संप्रददे । एवमनड्वद्ग्रामभूमिहस्त्यश्वरथरत्नादि दद्यात् । स्थापितदेवतापूजननमस्कारौ । आवाहन न जानामि । अपराधसहस्राणि क्रियतेऽहर्निश मया । यस्य स्मृत्या च नामोक्त्या तपो यज्ञक्रियादिषु । न्यून० । यातु देवगणा० इति पीठदेवता विसृज्य । प्रतिमा सोपस्करामाचार्याय दत्वाऽग्निं सपूज्य गच्छ गच्छ सुरश्रेष्ठेति० विसृज्य यथाशक्ति ब्राह्मणान् भोजयित्वा । ' चतुर्भिश्च चतुर्भिश्च द्वाभ्या पञ्चभिरेव च हूयते च पुनर्द्वाभ्या स मे विष्णु प्रसीदतु ' इति पठेत् । इत्यैंद्रशातिप्रयोगः ।

अभिषेकदिने च कृतनित्यक्रियो दर्भपाणी राजा प्राङ्मुख आसन उपविश्येष्टदेवता ध्यात्वा नमस्कृत्य मासपक्षाद्युल्लिख्य सकलराष्ट्रवश्यताकामोऽह सावत्सरपुरोहिताभ्यामात्मानमभिषेचयिष्य इति सकल्प्य गणेशपूजास्वस्तिवाचनमातृकापूजावसोर्धारापूजाऽभ्युदयिकश्राद्धानि कृत्वा सावत्सरपुरोहितौ त्रीन् ऋग्यजुर्विदो विप्रक्षत्रियवैश्यानमात्यान्सामग. चक विप्रममात्यमन्यश्चैक अन्यतमवेदविद् वृत्वा मधुपर्ककुडलकेयूरकटककठाभरणागुलीयकवस्त्रादिभिस्तान्सपूज्य चतुर्वर्गमुख्यानुपवेशयेत् । अथ पूर्वदिने कृतोपवास पुरोहित सितमाल्यचन्दनवासा सोष्णीषो होमदेश परिकल्प्य तस्मादुत्तरतोरणकदलीस्तभमडितायां स्नानशालाया व्रीहिषु यवेषु वा सौवर्णं नवकलश यथाविधि सस्थाप्य यथासभवमनेकतीर्थजलेनापूर्य सर्वौषधिसर्वगधसर्वरत्नसर्वबीजफलक्षीरिवृक्षक्षीरिलतापल्लवान् क्षिप्त्वा बहुभि सितवस्त्रैर्मालाभिश्चावेष्ट्य तत्समीप एक पञ्चगव्ययुतजलपूर्णं मृन्मय घृतेन पूर्णं हैम कुभ दुग्धेन राजत दध्ना ताम्र मधुना मार्त्तिक कशोदकेन च मार्त्तिक शतच्छिद्र च सौवर्णमन्याश्च यथालाभ नदीसर कूपचतु समुद्रोदकपूर्णान् मार्त्तिकान्स्थापयेत् । सर्वेषा च कलशानामुच्चता षोडशागुला । वैपुल्य द्विपचाशदगुलसूत्रवेष्टनयोग्य । तत पुरोहितो होमदेशे आथर्वणगृह्योक्तेनाऽव्यसश्चैत्यैद्रशातिप्रयोगलिखितेन प्रकारेणाग्निस्थापनादिसप्तदशाहुत्यात्मकाभ्यातानहोमातानि पूर्वागानि कृत्वा शर्मवर्मस्वस्त्ययनाऽऽयुष्य अभयापराजिताख्यै पञ्चभिर्गणैराथर्वणपरिशिष्टोक्तैराज्य जुहुयात् । ते च गणा वक्ष्यते । होमदेशस्थापितहैमकलशे च सपातान् क्षिपेत् । राजा च सितचंदनपुष्पवास सर्वालकारयुतोऽग्नेर्दक्षिणत उपविश्य सावत्सरप्रभृतिभिर्द्विजै सवस्यमुख्यै पुरोहितेश्च हूयमानाग्नेर्निमित्तानि पश्येत् । तानि च निमित्तानि प्रमाणनिर्णये ' दक्षिणावर्तशिख ' इत्यादिनोक्तानि । एव पुरोहित. प्रधानहोम समाप्यैन्द्रशात्युक्तेनैव प्रकारेण सप्तदशाहुत्यात्मकाभ्यातानहोमादिब्रह्मोत्थापननमस्कारातान्युत्तरागाणि कृत्वा सुगधतैलादिना स्वेच्छया कृतस्नान स्नानशालायामानीयासन उपवेश्य मृद्भि स्नपयेत् । तत्र सहस्रशीर्षेति पर्वताग्रमृदा शिर । अक्षिभ्यात इति वल्मीकातमृदा कर्णौ । तेनैव बिल्वालयमृदा मुख । ग्रीवाभ्यस्त इतींद्रध्वजस्थानमृदा ग्रीवा । आत्रेभ्य इति राजागणमृदा हृदय । यस्य विश्वानि हस्तयोरिति गजदतोद्धृतमृदा दक्षिणवामभुजौ । बन्हीना पितेति सरामृदा पृष्ठ । नाभानाभिं न इति संगममृदोदर । आ ते सिचामीति नदीकूलद्वयमृदा पार्श्वौ । सोमान सरणं इति वेश्याद्वारमृदा

१ ख–राजवित्तथा । २ घन–नाव्यम । ३ क०घरयटअनईघ–अभा । ४ ईयटअनघख–आप्येत् ।

कटिं । ऊरुभ्यात इति गजस्थानमृदोरू । मेहनाद्वलमिति गोष्ठमृदा जानुनी । तेनैवाश्वस्थानमृदा जंघे । एतावानस्येति रथचक्रोद्धृतमृदा पादौ । अगादगादिति सर्वमृद्भिः सर्वांगानि । ततः पूर्वस्थापितेन पचगव्ययुतेन जलकुम्भेन स्नपयेत् । मंत्रास्तु । गंधद्वारा । आप्यायस्व । दधिक्राव्ण. । तेजोऽसि शुक्र । आपोहिष्ठेत्याद्याश्च । तदा राजा तदासन त्यक्त्वा भद्रासन उपविशेत् । भद्रासन तु हैम राजत ताम्र क्षीरिदारुज वा माडलिकस्य हस्तेनोच्चमायत च । अनरेरजित' सपादहस्तेन । महाराजस्य सार्द्धहस्तेन । ततो विप्रामात्यस्तेजोऽसीति पूर्वस्थापितेन घृतपूर्णहैमकुमेन प्राच्या स्थित्वाऽभिषिंचेत् । क्षत्रियामात्य 'आप्यायस्वेति' दुग्धपूर्णेन रौप्यकुभेन दक्षिणत स्थित्वा । वैश्यामात्यो 'दधिक्राव्णेति' दधिपूर्णेन ताम्रकुभन पश्चिमत. स्थित्वा छदोगामात्यो 'मधु वाता' इति त्यृचेन मधुपूर्णेन मृत्कुभेनोत्तरत स्थित्वा स एव 'देवस्य त्वेति' कुशोदकपूर्णेन मृत्कुभेन तत्रैव स्थित्वा । देवस्यत्वे(स्य)त्याते अभिषिचामीति वाक्यशेष । तत पुरोहितोऽग्निं रक्षस्वामिति सदस्यान्प्रेष्य सपातयुतेन हैमकुमेन राजसूयाभिषेकमंत्रैरभिषिचेत् । ते च याजुषास्तावत् । सोमस्य त्वा द्युम्नेनाभिषिचाम्यग्नेर्भ्राजसा सूर्यस्य वर्चसेंद्रस्येन्द्रियेण क्षत्राणा क्षत्रपतिरेध्यतिदिद्यून्याहिं । इम देवा असपत्न सुवध्व महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय इममुष्यपुत्रममुष्यैपुत्रमस्यैविश एष षोमीराजा सोमोऽस्माक ब्राह्मणाना राजेति । इममित्यस्य स्थाने द्वितीयात राज्ञो नाम अमुष्येत्यत्र षष्ठ्यत तात्पितु अमुष्या इत्यत्र षष्ठ्यत तन्मातु. इमा आप शिवतमा इति तृच आग्वेदिक । देवस्य त्वा सवितु प्रसवेऽश्विनोर्बाहुभ्या पूष्णो हस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चस्य वर्चसेंद्रस्येन्द्रियेणाभिषिचामीति यजु । भूर्भुव स्वरिति व्याहृतयश्च । एवमन्यापि तत्तच्छाखीया बोध्या । तत पुरोहितो वन्हिसमीप गच्छेत् । ततो वेदशाखाभिज्ञोऽन्यो विप्रो भद्रासनगतमेव राजान शतछिद्रसौवर्णकुभेनाभिषिचेत् । तत 'या ओषधीरिति' सर्वौषधीनामुदक क्षिपेत् । 'रथे तिष्ठेति' यजुषा सूक्तेन गधस्योदक । 'आब्रह्मन् ब्राह्मणेति' यजुषा बीजाना । पुष्पवतीत्यथर्वणमत्रेण पुष्पाणा । तेनैव मन्त्रेणानेकफलाना । 'आशु शिशान 'इति सूक्तेन रत्नाना । 'ये देवा पुर सदेति' कुशानामुदकेन । केचित्तु कुशदूर्वापल्लवैरनेन मत्रेण राजागानि मार्जयेदित्याहुः । ततोन्य ऋग्वेदी विप्रो गोरोचनया गधद्वारेतिमत्रेण राज्ञ शिर कठ च लिपेत् । तत समीचीना विप्रा क्षत्रिया वैश्या शूद्रा अनुलोमाश्च यथालाभ गगायमुनाद्यनेकनदीसर कूपचतु समुद्रनिर्झरजलपूर्णैं पूर्वासादितैरनेककलशै स्वस्वशाखीयैर्मंत्रै शूद्रानुलोमादयश्च तुष्णीमेवाभिषिञ्चेयु । एतस्मिन्नेव कालेऽमात्यमुख्याश्च छत्रचामरवेत्रान् धारयेयु । वादका शङ्खभेर्यादीनि वादयेयु । विप्रा मत्रपाठ बन्दिनश्च स्तुति कुर्यु' । तत सावत्सर सर्वकुभमध्य आसादितहैमकुभोदक कुशैर्गृहीत्वा वक्ष्यमाणैः सुरास्त्वामभिषिचन्त्वित्यादिभिरशीत्युत्तरशतै' श्लोकैरभिषिचेन्मत्राते मत्रास्तु अभिषिंचत्विति क्रियापदानुसारेणैकसार्द्धद्वित्रिश्लोकात्मका ज्ञेया । सर्वमत्राते सर्वं तत्कलशस्थं जल क्षिपेत् । ते च

---

१ घअर्घझयद–ह्याप्येत । २ क्ष–अनरजित', यट–अनरजित् , घघन–अनरजितः, क–अनराजित , । ई–अनराजित । ३ यटअकघ–रेध्यदिद्यून्याहि, ध–नध्येतदिद्यून्याहि, त–रेध्या दिजयूज्याहि । ४ यटअ–आपपत्नं । ५ घकमटयनअ–वसुध्व । ६ घ–स्थित ।

श्लोका. समाप्तौ वक्ष्यते । ततो राजा सुगंधितैलोद्वर्त्तनशुद्धोदकै स्नात्वा श्वेतोर्ण्यादिवस्त्राणि धृत्वाऽऽदर्शे आज्ये च प्रतिबिंब दृष्ट्वा तदाज्यपात्र ससुवर्णं ब्राह्मणाय दत्वा चन्दनकुंकुमदधिदूर्वादि-मंगलद्रव्याण्यालभ्य श्रीविष्णु सुवर्णादिप्रतिमाया सूर्यमंडलेऽक्षतपुंजे वा षोडशोपचारैः ब्राह्मणा-न्वस्त्रालकारादिभि सावत्सरपुरोहितौ च मधुपर्कवस्त्रालंकारादिभि पूजयेत् । अथ दैवज्ञ' प्रागुक्तलक्षण पट्ट ललाटे मुकुटं च मूर्ध्नि बध्नीयात । तत' पुरोधा राजान शुभलग्ने उत्तरोत्तरक्रमेण वृषमार्जारतरक्षुसिंहव्याघ्रचर्मबहुमूल्यवस्त्रोत्तरछदेन चोपर्युपर्याच्छादिते मंच उपवेशयेत् । ततो द्वारपालस्तत्रोपविष्टाय राज्ञेऽमात्यान्पौरान्वणिज प्रकृतीश्च क्रमेण दर्शयेत् । राजा तु ग्रामवासोगजाश्वसुवर्णगोजागृहैरभिषेचकौ सावत्सरपुरोहितौ संपूज्य ऋग्यजु'सामविद' त्रीन्विप्राश्च तथैव सपूज्यान्याश्च ज्योतिर्विद् पुरोहित विप्रमुख्याश्च यथाविभव सपूज्य गोरस-मोदकादिभि संभोज्य गोवस्त्रतिलरूप्यान्नफलहेमसुपुष्पभूम्यादीनि तेभ्यो दत्वा चन्दनकेसरादिभि-रलकृतो दधिदूर्वादीनि मगलद्रव्याण्यालभ्य सशरचापहस्तोऽग्नि प्रदक्षिणीकृत्य गुर्वादीन्नत्वा महावृष गा च सवत्सा पृष्ठदेशे स्पृशेत् । तत पुरोधा' सलक्षण जात्यश्व महागज च तत्रानाय्य तौ सर्वौषधिकलशेन 'या ओषधीरिति' संस्नाप्य वस्त्रपर्याणसुवर्णरूप्यालकारादिभिरलकृत्याश्वं राज्ञ पुरत आनीयाभिमन्त्रयेत् । ते च मत्रा अश्वशान्तौ

" जयाश्व त्व मया राज्ञस्तुरगाय प्रतिष्ठित: । स्मराथ लक्ष्म्या पुत्रस्त्व गधर्व त्व तथा स्मर ॥
" यथा नृणामय राजा तथा त्व भव वाजिना ।
" यथा भवंत नृपतिर्नित्यमेवारुरुक्षति । तथा त्व रक्ष राजान सर्वावस्थागत हय ॥
" वर्धयाश्वं तथा स्वप्ने दैवदोषमुपागत । तुरगान्सकलान रक्ष त्वयि भारोऽयमर्पितः ॥
" अद्य प्रभृति राजा त्वामग्रेणाभ्येति भक्ति । अभ्यर्चयिष्यति सदा गधमाल्यानुलेपनैः ॥
" आशीर्भिश्च द्विजातीना तथा च स्वस्तिवाचनै । रक्षतु त्वा महेन्द्रस्तु पूर्वेण त्रिदशाधिप ॥
" दक्षिणेन यमो देव पश्चिमेन जलाधिप । उदग्वैश्रवणो देव सर्वे रक्षंतु सर्वत " ॥ इति

ततो गजमपि दक्षिणे कर्णे दैवविदा मंत्रित राजा रोहेत् । तन्मत्रास्तु गजशांत्युक्ता'

" श्रीगजस्त्व कृतो राज्ञा भव तस्य गजाग्रणी । गधमाल्याग्रभक्ष्यैस्त्वा पूजयिष्याति पार्थिव. ॥
" लोक मदाभंय पूजां करिष्यति यथा तव । पालनीयस्त्वया राजा युद्धेऽध्वनि तथा गृहे ॥
" तिर्यग्भावं समुत्सृज्य दिव्यभावमनुस्मर । देवासुरे पुरा युद्धे श्रीगजस्त्रिदशै कृत. ।
" ऐरावणसुत श्रीमानरिष्टो नाम वारण । श्रीगजाना तु यत्तेज सर्वमेवोपतिष्ठतु ॥
" तत्तेजस्तव नागेंद्र दिव्यभावसमन्वितत् । उपतिष्ठतु भद्र ते रक्ष राजानमाहवे " ॥ इति

अथ राजान गजमारुह्य गजारूढैरेव मुख्यामात्यसामंतसावत्सरपुरोहितादिभि सह महापथेन स्वपुर परिभ्रम्य देवतायतनानि गत्वा यथाविभव देवता सपूज्य गजारूढो गजारूढैरेव तै सह गृहमागत्य गजादवतीर्य गजावतीर्णैरमात्यादिभि सहातर्गृह प्रविश्य तान्सर्वानन्याश्च लोकान् यथाविभव दानमानसत्कारप्रियवचोभि सत्कृत्य कोटिलक्षायुतान्यतमसंख्यया विप्रान् सभोज्य दीनानाथेभ्यो भूयसीं दक्षिणा दत्वा स्वास्तिवाचन कारयित्वा सर्वान्विसृज्य सुहृदादियुतोऽतिहृष्टमना भुजीत ।

इति राजाभिषेकप्रयोगः ।

---

१ ज्ञ-पूर्वे । २ ई-अथादैवज्ञ । ३ कघटयअनबरक्षई-वेशयेत् । ४ यटकघत्रअनईरथ-मर्या । ५ बटईअन-पूर्वा । ६ एव मूले सर्व पुस्तकेषु पाठा । राज त गजामिति तु समीचीन पाठो भाति । ७ टय-अनवघ-मुरि ।

अथ पूर्वोपयुक्ता[1] शर्मवर्मादिगणाः ( अ० वे०२।३।१४–१५) ॥ यथा द्यौश्च पृथिवी च नबिभीतो नरिष्यव । एवामेप्राणमाविभे[2] १ । यथाहश्च रात्री च नबिभीतो न रिष्यथः।एवामे० ।२। यथा सूर्यश्च चद्रश्च ३ । यथा ब्रह्म च क्षत्र च ४ । यथा सत्य चानृत च० ५ । यथा भूतं च भव्य च ६ । प्राणापानौ मृत्योर्मापात स्वाहा । द्यावापृथिवी उपश्रुत्यामा० सूर्यचक्षुषा मा पाहि० । अग्ने वैश्वानर विश्वैर्मा देवैः पाहि । विश्वभर विश्वेन मा भर मा पाहि ५ ॐ जोस्योजो मेदा स्वाहा सहोसि सहोमदा बलमसि बलं मेदा । आयुरस्यायुर्मेदा । श्रोत्रमासि श्रोत्र मेदा । चक्षुरसि चक्षुर्मेदाः । परिपाणमासि परिपाणं मेदा । तुभ्यमेव जरिमन्वर्धता वय मेममन्येमृत्यवोहिंसिषुः[3] शंत ये । मातेव पुत्र प्रमना उपस्थे मित्र एनमियात्याल्व हस. । मित्र एन वरुणो मारिषादजरा मृत्यु कृणुता संविदानौ । तदग्निर्होता वयुनानि विद्वान्विश्वा देवाना जानि मा विर्वक्ति । त्यमीशिषे पशूना पार्थिवाना ये जाता उत वा ये जानित्रा. । मेम प्राणो हासीन्मो अपानो मेम मित्रा वधिषुर्मो अमित्रौ[4] । द्यौष्ट्वा पिता पृथिवी माता जरामृत्यु कृणुता सविदाने[5] । यथा जीवा आदितेरुपस्थे प्राणापानाभ्या गुपित[6] शत हि माः । इममग्न आयुषे वर्चसे प्रिय रेतो वरुण मित्रराजन् । माते वाऽस्मा अदिते शर्म यच्छन् विश्वे देवा जरदष्टिर्यथासत् । अक्षीभ्या ते नासिकाभ्या कर्णाभ्या चुबुकादधि । यक्ष्म शीर्षण्य मस्तिष्काज्जिव्हाया विवृहामि ते । ग्रीवाभ्यस्त उष्णिहाभ्य कीकसाभ्यो अनूक्यात् । यक्ष्म दोषण्यामसाभ्या बाहुभ्या विवृहामि ते २ । हृदयात्ते परिक्लोम्नोहलीक्ष्णात्पार्श्वाभ्या । यक्ष्मं मतस्नाभ्या प्लीन्होयकृस्तविवृहामसि । आन्त्रेभ्यस्ते गुदाभ्योऽवनिष्ठोरुदरादधि । यक्ष्म कुक्षिभ्या प्लाशेर्नाभ्याविवृहामि ते । ऊरुभ्या तेऽष्ठीवभ्या पार्ष्णिभ्या प्रपदाभ्या । यक्ष्मं भसद्यश्रोणिभ्या भसदभसो विवृहामि ते । अस्थिभ्यस्तेमज्जभ्य[7] स्नावभ्यो धमनिभ्य । यक्ष्म पाणिभ्यामगुलिभ्यो नखेभ्यो विवृहामि ते । अगे अगे लोम्नि लोम्नि यस्ते पर्वणि पर्वणि । यक्ष्मत्वचस्यते वय कश्यपस्य विबर्हेण विश्व च विवृहामसि । ७ । मुचामि त्वा हविषा जीवनायकमज्ञातयक्ष्मा-दुतराजयक्ष्मात् । ग्राहिर्जग्राह यद्येतदेज तस्या इद्राग्नीप्रमुमुक्तमेन २ । यदि क्षितायु यदि वा परेतो यदि मृत्योरंतिक नीत एव । तमाहरामि निर्ऋतेरुपस्थादस्पार्षमेन शत शारदाय २ । सहस्राक्षेण शतवीर्येण शतायुषा हविषा हार्षमेन । इन्द्रो यथैन शरदो न यात्यति विश्वस्य दुरितस्य पार । शत जीव शरदो वर्द्धमान शत हेमतान् शतमु वसंतान् । शतं त इद्रो अग्नि सविता बृहस्पति शतायुषा हविषा हार्षमेन । प्रविश तं प्राणापानावनड्वाहाविवव्रतं । कान्येय तु मृत्यवोयनाहुरितरान् शत ॥ इहैवस्तप्राणापानौमापगा.त.मितो युव । शरीरमस्यागानि जरसेव इत पुन जरायै त्वा परिददामि जरायै निर्धुवामि त्वा । जरा त्वा भद्रानेष्टव्यन्यथं तु मृत्यवायो नाहुरितरान् शतं ।

उत देवा अवहित देव उन्न यथा पुन[8] । उतागश्चकुष देवा देवा जीवयथापुनः ।

---

१ यटनघईर–र्मायां तं । २ बटयअनईघ–हिंसिषु । ३ ई–शांतये, न–शांतये । ४ नब–ति । ५ धयचबरअ–अमित्रौ । ६ घ—प्रविदानो । ७ घ–विवृहामिते । ८ घ–श्नु ।

द्वाविमौ वातौ वात आसिंधोरापरावत । दक्ष ते अन्य आवातु व्यन्यो वातु यद्रपः ।
आवातवाहिभेषजं विवातवाहि यद्रपः । त्व हि विश्वभेषजो देवाना दूत ईयसे ॥
त्रायंतामिह देवास्त्रायता मरुता गण । त्रायता विश्वा भतानि यथायमरपा असत् ॥
आत्वागमं शंतातिभिरथो अरिष्टतातिभि । यक्ष्म त उग्रमाभारिष परायक्ष्म सुवामि ते ॥
अयं मे हस्तो भगवाय मे भगवत्तरः । अय मे विश्वभेषजोऽय शिवाभिमर्शनं ।
हस्ताभ्या दशशाखाभ्या जिव्हा वाच पुरोगवी । अनामयित्नुभ्या हस्ताभ्या ताभ्या त्वापि स्पृशामसि॥
आवतस्त आवत. परावतस्त आवत. । इहैव भवमानुगा मा पूर्व्याननुगा. पुत्रेन सुबध्नामि ते दृढ ॥
यस्त्वाभिचेरुपुरुष स्वोयद्‌रणोजन । उन्मोचनप्रमोचने उभे वाचा वदामि ते ॥
यद्दुद्रोहितशेपिशे स्त्रियै पुंसे अचित्या । उन्मोव्यैद्न सोमात् कृताच्छेये पितृताच्च यत् ॥
उन्मो० यत्ते माता यत्ते पिता जामिर्भ्राता च सज्जत । प्रत्यकुस्वेव स्वभेषज जरदष्टिं कृणोमि त्वा ॥
इहैवधिपुरुष सर्वेण मनसा सह । द्रुहूतोपमस्वमानुगाअधिजीव पुरा इहि ॥
अनुभूत पुनरेहि विद्वान उदयन पथ । आरोहणमाक्रमण जीवतो जीवतोयन ।
माबिभेर्न मरिष्यसि जरदष्टिं कृणोहि त्वा । निरवोचमह यक्ष्मंममगेभ्योंगज्वरं तव ॥
अंगभेदो अगज्वरो यश्च ते हृदयामय । यक्ष्मश्येन इव प्रायतद्वाचासाढ परस्तरा ॥
ऋषीबोधप्रतीबोधावस्वप्नो यश्च जागातिः । तौ ते प्राणस्य गोप्तारौ दिवानक्त च जागृता ॥
अयमग्निरूप सद्य इह सूर्य उदेतु ते । उदेहि मृत्योर्गंभीरात्कृष्णाच्चितमसरपरि ॥
नमो यमाय नमो अस्तु मृत्यवे । नम पितृभ्य उत येन यंति ॥
उत्पारणस्य यो वेद तमग्नि पुरोदधेस्मा अरिष्टतातये ॥
ऐतु प्राण ऐतु मन ऐतु चक्षुरथो बल । शरीरमस्य सविदा तत्पभ्वा प्रतितिष्ठतु ॥
प्राणेनाग्ने संसृजतु धात प्राणो न सदित । प्राणेन विश्वतो मुख सूर्य देवा अजनयन् ।
आयुष्यायुः कृता जीवा युष्मान् जीव मा मृथां । प्राणेनात्मीताजीवामामृत्योरुदकावरा देवाना निहित निधिं ।
यमिद्राश्चविंदत् पथिभिर्देवयानै । आपो हिरण्य जगृभुस्त्रिवृद्भिस्तास्त्वा रक्षतु त्रिवृताभिस्त्रिवृद्भि ॥
त्रीन्नाकास्त्रीन्समुद्रास्त्रीन् ब्रध्नास्त्रीन्वैष्टपास्त्रीन्मातृश्वनस्त्रीन सूर्यांच गोप्तृन कल्पयामि ते ॥
उपप्रिय पनिप्नत युवान माहुतीवृध । अगन्म बिभ्रतो नमो दीर्घमायु कृणोतु मे ॥
अंतकाय मृत्यवे नम प्राणापाना इह ते रमता । इहायमस्तु पुरुष सहासुना सूर्यस्य भागे अमृतस्य लोके ॥
उद्देन भगो अग्रभीदुद्देन सोमो अशुमान् । उद्देन मरुतो देवा उदिंद्राग्नी स्वस्तये ॥
इह ते सुरिहमाणा इहायुरिह मन । उत्त्वार्निर्ऋत्या पाशेभ्यो दैव्या वाचा भरामासि ॥
उत्क्रामात. पुरुषमावपत्थामृत्यो पड्‌वींशरवमुचमानः । मास्थित्या अस्माल्लोकादग्ने सूर्यस्य सदृश ॥
तुभ्य वात पवता मातरिश्वा तुभ्य वर्षंत्वमृतान्याप । सूर्यस्ते तन्वे ३ शतयामि त्वा मृत्युर्दयता काप्रमेष्ठा ॥

---

१ झ–प्रय. । २ झ–त । ३ यटअनवधघ–यमस्य । ४टयअनवब–यदमगेभ्यो । ५ यटअनधव–वतारणस्य । ६ घ–अजनयन् । ७ टयअव–मृथा, घन–मृथा । ८ घ–प्राणेनात्मतां जीवाम. घवन–तामा अईटय–प्राणेनात्मवी जीवामा । ९ घ–पड्विंशा ।

उधानं ते पुरुषनावनावयान जीवातुं ते दक्षतातिं कृणोमि ।
आँहिरोमरमृत सुख रथमथाजिर्विर्चिदथमवदासि । मा ते मनस्तत्र गान्मातिरोभून्मा जीवेभ्यः ।
प्रमदो मानुगाः पितृन् । विश्वेदेवा अभिरक्षंतु त्वैहामागतान्ममादीधीथायेन न 'यति परावतं ॥७॥
आरोह तमसो ज्योतिरेह्याते हस्तैरमामहे।श्यामश्च त्वा मा शबलश्च प्रेषितौ यमस्य यौ पथिरपीश्वानौ॥
अर्वाङेहि मा विदीधो मात्रविष्ठ पराङ्मनाः । मैन पथामनुगा भीम एष येन पूर्वं नृपथ त ब्रवीमि ।
तमएतत्पुरुषमाप्रयस्छाभयं परस्तावमय ते अर्वाक् ॥१०॥
द्विपदा रक्षंतु त्वाअयो ये अएस्वता रक्षतु त्वा मनुष्या ॥ ३ ॥
यमिंघते वैश्वानरो रक्षतु जातवेदा दिव्यस्त्वामाप्रधाग्विद्युता सहः ।
मा त्वा क्रव्यावभिमंस्तारात्सकसुकार्चं ।
रक्षतु त्वा द्यौ रक्षतु पृथिवी सूर्यश्च रक्षतामस्वप्नश्च त्वा रक्षता चंद्रमाश्च । अंतरिक्ष रक्षतु देवहेत्याः।
बोधश्च त्वा प्रतीबोधश्च रक्षतामस्वप्नश्च त्वा नवद्राणश्च रक्षता । गोपायश्च त्वा जागृविश्च रक्षतां ॥
ते त्वा रक्षंतु ते त्वा गोपायतु तेभ्यो नमस्तेभ्यः स्वाहा ।
जीवेभ्यस्त्वा समुदेवायुरिंद्रो धाता दधातु सविता त्रायमाण । मा त्वा प्राणो बलहासीद्सतेतुव्हयामति।
मा त्वा जभ सहनुर्मातमोविदन्मार्वाहि प्रमयुः कथास्या । उत्वादित्या वसवो भरंतूइंद्राग्नी स्वस्तये ॥
उ त्वा द्यौरुत्पृथिव्युत्प्रजापतिरब्रवीत् । उत्वा मृत्यारोषधयः सोमराज्ञीरपीपरन् ॥
अय देवा इहैवास्त्वय मा पुत्रगादितः । इमं सहस्रवीर्येण मृत्योरुत्पातयामपि ॥
उत्वा मृत्योरपीपर [10]सनघतु वयोधतः । मा त्वा व्यस्तकेश्यो मा त्वा पुरुदोरुदन् ।
आर्षमेभिद त्वा पुनराग' पुनर्णव । सर्वांगसर्वं ते चक्षुः सर्वमायुश्च ते विदन् ।
व्यैवा ते ज्योतिरभूद्यत्वत्तमो अक्रमीत् । अपेत्वन्मृत्यु निर्ऋतिमपयक्ष्म निदधासि ।
आरभस्वे मांमृतस्य श्रुष्टिरच्छिद्यमाना जरदष्टिरस्तु ते ।
असु त आधु पुनराभरामि रजस्तमो मोपगा मा प्रमेष्ठा ।
जीवता ज्योतिरभ्येह्यर्वाङाल्वा हरामि शत शारदाय ।
अव मुंच मृत्युपाशानशर्ष्टि द्राघीय आयु प्रतर ते दधामि। वाताते प्राणमविदन्सूर्याश्चक्षुरिद तव ।
यत्तेमरस्त्वयि तद्धारयामि सवित्सागैर्मदाजिव्हया लपन् ॥
प्राणेन त्वा द्विपदा चतुष्पदामग्निमिव जातमभिसधमासि । नमस्ते मृत्यो चक्षुषे नमः प्राणाय ते करन् ।
अय जीवतु मा मृतेयसमैरपामसि । कृणोम्यस्मै भेषज मृत्यो मा पुरुष वधीं ।
जीवलानघारिषाजीवतीमोषधामह । त्रायमाणा सहमाना सहस्वतीमिह हुवे स्माअरिष्टतातये ।
अधिब्रूहि मारभथा सजेम तवैव सछवस्ताया इहास्तु ॥
भवाशर्वो मडत शर्वं यछ तमायासिब्वदुरित धत्तमायु । अस्मै मृत्यो आधिब्रूहि मदयस्रोदितो ॥
यमे तु । अरिष्ट. सर्वांग सभुर्जरसाशतहायन आत्मना मुजमश्नुता ।

---

१ ध–पुरुषनावयान ।२ यटघटअनव–जीवातु ते । ३ टयनघईकय–अहिरोमामृत । ४ ध–रोमममृत । ५ यटवअनश्यई–विषदेवा । ६ ज्ञ–य नयति । ७ ज्ञ–चर । ८ घ–भाजिन्हार्वाहि । ९ ध–तु । १० ध–सवधंतु । ११ ध– र्यां, बघनं–स्वेपि, टयअ–स्वोपि । १२ ध–आर्वमद, टयनबघअ–आर्यमणिद । १३ ध–दां । १४ ध–अपा, नव–अयत्व, टयअ–आथत्व । १५ ध–एवे । १६ ध–तु विष्ठि । १७ध–भमु, घनव–आर्द्रु, ई अमुत । १८ धव–मा,–ई–बारयामि यटवमन, ईयअटयनव–चांगेमा । १९ ध–सधामि, कमयटघअनई–संघमानि । २० टयघनअई–मायुष वधी । २१ ज्ञ–ते । २२ ई–यामेंत्वरयजिविचिर्दयवदा। २३ घमव–आस्नातु, टयअई–आत्मान ।

देवाना हेतिः परि त्वा वृणक्तु पारयामि त्वा रजस उत् त्वा मृत्योरपीपरम् ।
आराद्‌ग्निं क्रव्यादं निरूहं जीवातवे ते परिधिं दधामि ॥ ९ ॥
यत्ते वियानं रजसं मृत्यो अनवघर्ष्यम् । पेथ इम तस्माद्रक्षतो ब्रह्मास्मै वर्म कृण्मसि ॥ १० ॥
कृणोमि ते प्राणापानौ जरां मृत्युं दीर्घमायु स्वस्ति ॥
ववैस्वतेन प्रहितान्यमदूतांश्चरतोऽप सेधामि सर्वान् ॥ ११ ॥
आरादरातिं निर्ऋतिं परो ग्राहिं क्रव्याद पिशाचान् । रक्षो यत्सर्वं दुर्भूतं तत्तम इवाप हन्मसि ॥१२॥
अग्नेष्टे प्राणममृतादायुष्मतो वन्वे जातवेदस. ॥
यथा न रूष्यां अमृतः सजूरससतत्ते कृणोमि तदु ते समृध्यताम् ॥ १३ ॥
शिवे ते स्तां द्यावापृथिवी असतापे अभिश्रियौ । श ते सूर्य आतपतु शं वातो वातु ते हृदे ।
शिवा अभिक्षरंतु त्वा आपो दिव्या पयस्वतीः ॥ १४ ॥
शिवास्ते संत्वोषधय उत्वाहार्षमधरस्या उत्तरा पृथिवीमभि ।
तत्र त्वादित्यौ रक्षतां सूर्याचन्द्रमसावुभा ॥ १५ ॥
यत्ते वासः परिधानं यां नीविं कृणुष्वे त्वम् । शिवं ते तन्वे [1] तत्कृण्मः संस्पर्शेऽद्रूक्ष्णमस्तु ते ॥१६॥
यत् क्षुरेण मर्चयता सुतेजसा वप्ता वपसि केशश्मश्रु । शुभं मुखं मा न आयुः प्रमोषीः ॥ १७ ॥
शिवौ ते स्तां व्रीहियवावबलासावदोमधौ । एतौ यक्ष्मं वि बाधेते एतौ मुञ्चतो अंहसः ॥ १८ ॥
यदश्नासि यत्पिबसि धान्यं कृष्याः पयः । यवाद्यं [1] यदन्नाद्यं सर्वं ते अन्नमविषं कृणोमि ॥१९॥
अन्हे च त्वा रात्रये चोभाभ्यां परि दद्मसि । अरायेभ्यो जिघत्सुभ्य इमं मे परिरक्षत ॥ २० ॥
शतं ते युत हायनान्द्वे युगे त्रीणि चत्वारि कृण्मः । इन्द्राग्नी विश्वे देवास्तेनुमन्यतामहृणीयमानाः ॥२१॥
शरदे त्वा हेमन्ताय वसन्ताय ग्रीष्माय परिदद्मसि । वर्षाणि तुभ्यं स्योनानि येषु वर्धन्त ओषधीः ॥२२॥
मृत्युरीशे द्विपदां मृत्युरीशे चतुष्पदां । तस्मात्त्वां मृत्योर्गोपतेरुद्भरामि स मा बिभेः ॥ २३ ॥
सोरिष्ट न मरिष्यसि न मरिष्यसि मा बिभे । न वै तत्र म्रियन्ते नो यन्त्यधमं तमः ॥ २४ ॥
सर्वो वै तत्र जीवति गौरश्व पुरुष पशुः । यत्रेदं ब्रह्म क्रियते परिधिर्जीवनाय कम् ॥ २५ ॥
परि त्वा पातु समानेभ्यो अभिचारात्सबंधुभ्यः । अमम्रिर्भवामृतोतिजीवो मा ते हासिषुरसवः शरीरं ॥२६॥
ये मृत्यव एकशतं या नाष्ट्रा अतितार्याः । मुञ्चतु तस्मात्त्वा देवा अग्नेर्वैश्वानरादधि ॥ २७ ॥
अग्ने शरीरमसि पारयिष्णु रक्षोहासि सपत्नहा । अथो अमीवचातनः पूतद्रुर्नाम भेषजं ॥
प्राणाय नमो यस्य सर्वमिदं वशे । यो भूतः सर्वस्येश्वरो यस्मिन्सर्वं प्रतिष्ठितं ॥ ( ११।४।१ )
नमस्ते प्राण क्रन्दाय नमस्ते स्तनयित्नवे । नमस्ते प्राण विद्युते नमस्ते प्राण वर्षते ॥ २ ॥
यत्प्राण स्तनयित्नुनाभिक्रन्दत्योषधीः । प्रवीयन्ते गर्भान्दधतेऽथो बह्वीर्वि जायन्ते ॥३॥
यत्प्राण ऋता वागते अभिक्रन्दत्योषधीः । सर्वं तदा प्रमोदते यत्किं च भूम्यामधि ॥ ४ ॥
यदा प्राणो अभ्यवर्षीद्वर्षेण पृथिवीं महीं । पशवस्तत्प्र मोदन्ते महो वै नो भविष्यति ॥ ५ ॥
अभिवृष्टा ओषधयः प्राणेन समवादिरन् । आयुर्वै नः प्रातीतरः सर्वा नः सुरभीरकः ॥ ६ ॥

---

१ कयख–यूथ, घछयञ–यथा, २ रिप्या इति मुद्रितपाठः । ३ घअनयर्ष्य–याभीवक्षुयेरव । ४ घ–वि, कघटयवअन–क्ष्ण ई–इरआसातुते ।५ नवघ–चल,–कार्इटअ–चपल । ६ टयखनअसहर–हत्या यवः ७ ङ–वर्दताय । ८ भ–दे । ९ इअघदअघर–अयात्रि । १० कथअनटयअहर–+.१ । (शरीरं) ११ ईअय–बलयघ–थे । १२ कघहईरयअमघ–वस्तो । १३ यमटयअअ–प्राग ।–१४ घअनट नर्ई सुरभीरकृत ।

नमस्ते अस्त्वायते नमो अस्तु परायते । नमस्ते प्राण तिष्ठत आसीनायोत ते नमः ॥ ७ ॥
नमस्ते प्राण प्राण ते नमो अस्त्वापान ते । पराचीनाय ते नमः प्रतीचीनाय ते नमः ॥
सर्व्वस्मै त इदं नमः ॥८॥
या ते प्राण प्रिया तनूर्या ते प्राण प्रेयसी । अथो यद्भेषजं तव तस्य नो धेहि जीवसे ॥ ९ ॥
प्राणः प्रजा अनु वस्ते पिता पुत्रमिव प्रियं । प्राणोह सर्वस्येश्वरो यच्च प्राणाति यच्च न ॥ १० ।
प्राणो मृत्युः प्राणस्तक्मा प्राणं देवा उपासते । प्राणो ह सत्यवादिनमुत्तमे लोक आ दधत् ॥ ११ ।
प्राणो विराट् प्राणो देष्ट्री प्राण सर्व उपासते । प्राणो ह सूर्यश्चंद्रमा प्राणमाहु. प्रजापति ॥ १२ ॥
प्राणापानो व्रीहियवावनड्वान्प्राण उच्यते । यवे ह प्राण आहितो अपानो व्रीहिरुच्यते ॥ १३ ॥
अपानति प्राणति पुरुषो गर्भे अंतरा । यदा त्व प्राण जिन्वस्यथ स जायते पुनः ॥ १४ ॥
प्राणमाहुर्मातरिश्वानं वातो ह प्राण उच्यते । प्राणे ह भूतं भव्य च प्राणे सर्वं प्रतिष्ठितं ॥१५॥
आथर्वणीराङ्गिरसीर्दैवीर्मनुष्यजा उत । ओषधयः प्र जायते यदा त्व प्राण जिन्वसि ॥ १६ ॥
यदा प्राणो अभ्यवर्षीद्वर्षेण पृथिवीं महीं । ओषधयः प्र जायतेऽथो या काश्च वीरुध ।१७॥
यस्ते प्राणेद् वेद यस्मिंश्चासि प्रतिष्ठित. । सर्वे तस्मै बलिं हरानमुष्मिंल्लोक उत्तमे ॥ १८ ॥
यथा प्राण बलिहृतस्तुभ्य सर्वाः प्रजा इमा ।एवा तस्मै बलि हरान्यस्त्वाःस्तस्मै श्रृणत्सुश्रव. ॥ १९॥
अतर्गर्भश्चरति देवतास्वाभूतो भूतः स उ जायते पुनः ।
स भूतो भव्यं भविष्यात्पितापुत्र प्रवि वेशा शचीभि ॥ २० ॥
एक पादं नोत्खिदति सलिलाद्धंस उच्चरन् । यदंग स तमुत्खिदेन्नैवाद्य न श्व स्यात् ।
न रात्री नाहस्स्यान्न व्युच्छेत्कदाचन ॥ २१ ॥
अष्टाचक्रं वर्तत एकनेमि सहस्राक्षरं प्र पुरो नि पश्चा ॥
अर्धेन विश्व भुवनं जजान यदस्यार्द्धं कतमः स केतुः ॥ २२ ॥
यो अस्य विश्वजन्मन ईशे विश्वस्य चेष्टत' । अन्येषु क्षिप्रधन्वने तस्मै प्राण नमोऽस्तु ते ॥२३॥
यो अस्य सर्वस्य जन्मन ईशे सर्वस्य चेष्टत' । अतन्द्रो ब्रह्मणा धीर प्राणो मानु तिष्ठतु ॥ २४ ॥
ऊर्ध्वः सुप्तेषु जागार नन्नु तिर्यङ्नि पद्यते । न सुप्तमस्य सुप्तेष्वनु शुश्राव कश्चन ॥ २५ ॥
प्राण मा मत्पर्यावृतो न मदन्यो भविष्यति । अपा गर्भमिव जीवसे प्राण बध्नामि त्वा मयि ॥ २६॥

इत्यायुष्यगणः ॥

विषासहिं सहमानं सासहानं सहीयासम् । सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितम् ।
ईड्यं नाम ह्व इन्द्रमायुष्मान् भूयास ॥ ( १७।१।१-३० )
विषासहिमिति संपूर्णः पुनः । ईड्यं नामह्व इंद्र प्रियो देवानां भूयासं ॥२॥ विषासहिं० ईड्यं०
इंद्रं प्रियः प्रजाना० ।३।विषा० ईड्यं० इंद्रं प्रियो. पशूना० ।४।विषा० ईड्यं० इन्द्रं प्रिय समानाना० ।५।
अद्भिस्तुविहि सूर्यवर्चसा मामुदिहि । द्विषंश्च मह्यं रध्यतु मा चाह द्विषते रध । तवेद्विष्णो
बहुधा वीर्याणि । त्वं न. पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥ ६ ॥
उदिद्याद्दियाश्च पश्यामि याश्च न तेषु मा सुमतिं कृधि तवे० । त्वं नः प्रा० ॥ ७ ॥

१ अर्धेन[illegible]–देह । २ धनव–प्राणेद । ३ सर्वपाठ ३ ईर[illegible] स्वा ३ [illegible]
[illegible] अ. नेत्रिवृदति । ५ ईर[illegible] पदमसन् सुखिवदे । ६ ईर[illegible] सर्वेत । ७ ईर[illegible]
[illegible] दकुन्पी १८ अश्वं । ८ [illegible] । सि

मा त्वा दभन्त्सलिले अप्स्व१न्तर्ये पाशिन उपतिष्ठन्त्यत्र शतमौ भव ॥
त्वं न इन्द्रोतिभिः शिवाभिः हिंसा शर्ति दिवमारुक्ष एतां स नो मृड सुमतौ ते स्याम तवे० ।
आरोहंस्त्रिदिवं दिवो गृणानः सोमपीतये प्रियधामा स्वस्तये तवे० ॥ १० ॥
त्वं न इन्द्र महते सौभगायादब्धेभिः परि पाह्यक्तुभिः । तवे० ॥
त्वमिन्द्रासि विश्वजित्सर्ववित्पुरुहूतस्त्वमिंद्र । त्वमिंद्रेम सुहवस्तोममेरयस्व
स नो मृड सुमतौ ते स्याम तवे० ॥ ११ ॥
अदब्धो दिवि पृथिव्यामुतासि न त आपुर्महिमानमंतरिक्षे ॥
अदब्धेन ब्रह्मणा वावृधान स त्वं न इन्द्र दिवि शं शर्म यच्छ । तवेन्द्रि० ॥ १२
या त इन्द्र तनूरप्सु या पृथिव्यां यातरग्नौ यात इंद्र पवमाने स्वर्विदि ॥
ययेंद्र तन्वा३ंतरिक्षं व्यापिथ तया न इन्द्र तन्वा३शर्म यच्छ । तवे० ॥ १३ ॥
त्वामिंद्र ब्रह्मणा वर्धयत सत्र निषेदुर्ऋषयो नाधमाना. तवे० ॥ १४ ॥
त्वं तृतं त्व पर्येष्युत्स सहस्रधारं विदथं स्वर्विद् । तवे० ॥ १५ ॥
त्व रक्षसे प्रदिशश्चतस्रस्त्व शोचिषा नभसी वि भासि । त्वमिमा विश्वा भुवनानु तिष्ठ स ऋतस्य
पंथामन्वेषि विद्वांस्तवे० ॥ (१६) ॥
पचभि पराङ् तपस्येकयार्वाङशस्तिमेषि सुदिने बाधमानस्तवेन्द्रि० १७ ॥
त्वमिंद्रस्त्वं महेंद्रस्त्वं लोकस्त्वं प्रजापतिः । तुभ्य यज्ञो वितायते तुभ्यं जुह्वति जुह्वतस्तवे० ॥१८॥
असति सत्प्रतिष्ठित सति भूत प्रतिष्ठित । भूत ह भव्य आहितं भव्यं भूते प्रतिष्ठित । तवेन्द्रि० ।
त्व नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥ १९ ॥
शुक्रोऽसि भ्राजोऽसि । स यथा त्व भ्राजता भ्राजोऽस्येवाह भ्राजता भ्राज्यासम् ॥ २० ॥
रुचिरसि रोचोऽसि । स यथा त्व रुच्या रोचोऽस्येवाह पशुभिश्च ब्राह्मणवर्चसेन च रुचिषीय ॥२१॥
उद्यते नम उदायते नम उदिताय नम । विराजे नमः स्वराजे नमः सम्राजे नमः ॥ २२ ॥
अस्तयते नमोऽस्तमेष्यते नमोऽस्तमिताय नमः । विराजे नमः स्वराजे नम सम्राजे नमः ॥ २३ ॥
उदगादयमादित्यो विश्वेन तपसा सह । सपत्नान्मह्य रधयन्मा चाह द्विषते रध । तवेन्द्रि० ॥
त्व न पृणीहि पशुभिर्विश्वरूपै. सुधायां मा धेहि परमे व्योमन् ॥ २४ ॥
आदित्य नावमारुक्ष. शतारित्रां स्वस्तये । अहर्मात्यपीपरो रात्रिं सत्राति पारय ॥ २५ ॥
सूर्य नावमारुक्ष शतारित्रां स्वस्तये । रात्रिं मात्यपीपरोऽहः सत्राति पारय ॥ २६ ॥
प्रजापतेरावृतो ब्रह्मणा वर्मणाहं कश्यपस्य ज्योतिषा वर्चसा च ॥
जरदष्टिः कृतवीर्यो विहायाः सहस्रायुः सुकृतश्चरेयम् ॥ २७ ॥
परीवृतो ब्रह्मणा० । मा मा प्रापन्निषवो दैव्या या मा मानुषीरवसृष्टा वधाय ॥ २८ ॥
ऋतेन गुप्त ऋतुभिश्च सर्वैर्भूतेन गुप्तो भव्येन चाहं ॥
मामा प्रापत्पाप्मा मोत मृत्युरंतर्दधेऽहं सलिलेन वाचः ॥ २९ ॥
अग्निर्मा गोप्ता परि पातु विश्वत उद्यन्त्सूर्यो नुदतां मृत्युपाशान् ॥
व्युच्छन्तीरुषसः पर्वता ध्रुवा. सहस्रं प्राणा मय्या यतन्ताम् ॥ ३० ॥

इत्यायुष्यगणः ॥

---

१ अनटयकथ हीं येन २ क्षुर्हिं. ३ घ-प. ४ दर्भ३ंटर्यथ नवाकः, मेर्न में मांगो।

# अथ सर्वस्यगणः ॥

ये त्रिषप्ताः परियंति विश्वा रूपाणि बिभ्रतः । वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे ॥ १ ॥
पुनरेहि वाचस्पते देवेन मनसा सह । वसोष्पते नि रमय मय्येवास्तु मयि श्रुतम् ॥ २ ॥
इहैवाभि वि तनूभे आर्त्नी इव ज्यया । वाचस्पतिर्नि यच्छतु मय्येव० ॥ ३ ॥
उपहूतो वाचस्पतिरुपास्मान्वाचस्पतिर्ह्वयताम् । सं श्रुतेन गमेमहि मा श्रुतेन वि राधिषि ॥ ४ ॥
अस्मिन्वसु वसवो धारयंत्विंद्रः पूषा वरुणो मित्रो अग्निः ॥
इममादित्या उत विश्वे च देवा उत्तरस्मिन् ज्योतिषि धारयंतु ॥ १ ॥
अस्य देवाः प्रदिशि ज्योतिरस्तु सूर्यो अग्निरुत वा हिरण्यम् ॥
सपत्ना अस्मदधरे भवंतूत्तमं नाकमधि रोहयेमम् ॥ २ ॥
येनेंद्राय समभरः पयांस्युत्तमेन ब्रह्मणा जातवेदः ॥
तेन त्वमग्न इह वर्धयेमं सजातानां श्रैष्ठ्य आ धेह्येनम् ॥ ३ ॥
ऐषां यज्ञमुत वर्चो ददेऽहं रायस्पोषमुत चित्तान्यग्ने[१] । सपत्ना० ॥ ४ ॥
प्रातरग्निं प्रातरिंद्रं हवामहे सप्तऋचः ॥ प्रथमायां द्वितीयायां हुवेमेत्यत्र हवामहे ॥
उतोदितौ मघवन्० ॥ अस्तु देवस्तेना वयं० ॥ वसु विंद भग मे० ॥
हस्तिवर्चसं प्रथतां बृहद्यशो अदित्या यत्तन्वः संबभूव ॥
तत्सर्वे समदुर्मह्यमेतद्विश्वे देवा अदितिः सजोषाः ॥ १ ॥
मित्रश्च वरुणश्चेन्द्रो रुद्रश्च चेततु । देवासो विश्वधायसस्ते माञ्जंतु वर्चसा ॥ २ ॥
येन हस्ती वर्चसा संबभूव येन राजा मनुष्येष्वप्स्व ॥
येन देवा देवतामग्र आयन्तेन मामद्य वर्चसाग्ने वर्चस्विनं कृणु ॥ ३ ॥
यत्ते वर्चो जातवेदो बृहद्भवत्याहुतेः । यावत्सूर्यस्य वर्च आसुरस्य च हस्तिनः ॥
तावन्मे अश्विना वर्च आ धत्तां पुष्करस्रजा ॥ ४ ॥
यावच्चतस्रः प्रदिशश्चक्षुर्यावत्समश्नुते । तावत्समैत्विंद्रियं मयि तद्धस्तिवर्चसं ॥ ५ ॥
हस्ती मृगाणां सुषदामतिष्ठावान्बभूव हि । तस्य भगेन वर्चसाभि षिंचामि मामहम् ॥ ६ ॥
सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्राह्मणे या ॥ इंद्रं या देवी० सा न ऐतु वर्चसा० ॥ १ ॥
यशो हविर्वर्धतामिंद्रजूतं सहस्रवीर्यं सुभृतं सहस्कृतम् ॥
प्रसर्स्राणमनु दीर्घाय चक्षसे हविष्मंतं मा वर्धय ज्येष्ठतातये ॥ २ ॥
अच्छा न इंद्रं यशसं यशोभिर्यशस्विनं नमसाना विधेम ॥
स नो रास्व राष्ट्रमिंद्रजूतं तस्य ते रातौ यशसः स्याम ॥ २ ॥
यशा इन्द्रो यशा अग्निर्यशाः सोमो अजायत । यशा विश्वस्य भूतस्याहमस्मि यशस्तमः ॥ ३ ॥
यशसं मेंद्रो मघवान् कृणोतु यशसं द्यावापृथिवी उभे इमे ॥
यशसं मा देवः सविता कृणोतु प्रियो दातुर्दक्षिणाया इह स्याम् ॥ १ ॥
यथेंद्रो द्यावापृथिव्योर्यशस्वान् यथाप ओषधीषु यशस्वतीः ॥
एवा विश्वेषु देवेषु वयं सर्वेषु यशसः स्याम ॥ २ ॥ यशा इंद्रो यशा अग्नि० ॥ ३ ॥

---

१ कठन-मे

१ अ. वे सं. १।१।१-४। श—सपत्ना। २ अ. वे स. १।९।१-४। ३ अ वे. स. ३।१६। ४ अ. वे. ३।२२। ५ अ. वे. सं. ६।३८।३५।१।३ ६ अ. वे. सं. ६।६।५८

गिरावरगराटेषु हिरण्ये गोषु यद्यशः । सुरायां सिच्यमानायां कीलाली मधु तन्मयि ॥ १ ॥
अश्विना सारघेण मा मधुनाङ्क्तं शुभस्पती । यथा भर्गस्वतीं वाचमावदानि जनाँ अनु ॥ २ ॥
मयि वर्चो अथो यशोऽथो यज्ञस्य यत्पयः । तन्मयि प्रजापतिर्दिवि द्यामिव दृंहतु ॥ ३ ॥
यथा सोमः प्रातःसवने अश्विनोर्भवति प्रियः । एवा मे अश्विना वर्च आत्मनि ध्रियताम् ॥ ११ ॥
यथा सोमो द्वितीये सवन इंद्राग्न्योर्भवति प्रियः । एवा म इंद्राग्नी वर्च आत्मनि ध्रियताम् ॥१२॥
यथा सोमस्तृतीये सवन ऋभूणां भवति प्रियः । एवा मे ऋभवो वर्चश्च ध्रियतां ॥ १३ ॥
यद्गिरिषु पर्वतेषु गोष्वश्वेषु यन्मधु । सुरायां सिच्यमानायां यत्तत्र मधु तन्मयि ॥ १८ ॥
अश्विना सारघेण मा मधुनाङ्क्त शुभस्पती । यथा वर्चस्वतीं वाचमावदानि जनाँ अनु ॥ १९ ॥
स्तनयित्नुस्ते वाक् प्रजापते वृषा शुष्मं क्षिपसि भूम्यां दिवि ॥
तां पशव उप जीवंति सर्वे तेनो सेषमूर्जं पिपर्त्ति ॥ २० ॥
पृथिवी दंडोऽन्तरिक्षं गर्भो द्यौः कशा विद्युत्प्रकशो हिरण्ययो बिंदुः ॥ २१ ॥
यो वै कशायाः सप्त मधूनि वेद मधुमान् भवति ।
ब्राह्मणश्च राजा च धेनुश्चानड्वांश्च व्रीहिश्च यवश्च मधु सप्तमम् ॥ २२ ॥
मधुमान् भवति मधुमदस्याहार्यं भवति । मधुमतो लोकान् जयति य एवं वेद ॥ २३ ॥
यद्वीध्रे स्तनयति प्रजापतिरेव तत्प्रजाभ्यः प्रादुर्भवति । तस्मात्प्राचीनोपवीतस्तिष्ठे प्रजापतेऽनु
मा बुध्यस्वेति । अन्वेनं प्रजा अनु प्रजापतिर्बुध्यते य एवं वेद ॥ २४ ॥
यच्च वर्चोऽक्षेषु सुरायां च यदाहितं । यद्गोष्वश्विना वर्चस्तेन मां वर्चसावतम् ॥ २५ ॥
येन महानघ्न्या जघनमश्विना येन वा सुरा । येनाक्षा अभ्यषिच्यन्त तेनेमा वर्चसावतम् ॥ २६ ॥
योऽनिध्मो दीदयदप्स्वन्तर्यं विप्रास ईडते अध्वरेषु ॥
अपां नपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्यावान् ॥ २७ ॥
इदमहं रुशन्तं ग्राभं तनूदूषिमपोहामि । यो भद्रो रोचनस्तमुदचामि ॥ २८ ॥
आस्यै ब्राह्मणाः स्नपनीर्हरंत्ववीरघ्नीरुदजन्त्वापः ।
अर्यम्णो अग्निं पर्येतु पूषन्प्रतीक्षन्ते श्वशुरो देवरश्च ॥ २९ ॥
शं ते हिरण्यं शमु सन्त्वापः शं मेथिर्भवतु शं युगस्य तर्द्म ॥
शं त आपः शतपवित्रा भवंतु शमु पत्या तन्वं सं स्पृशस्व ॥ वर्चस्यगणः समाप्तः ॥ ४० ॥
अमू पारे पृदाक्वस्त्रिषप्ता निर्जरायवः ।
तासां जरायुभिर्वयमक्ष्या३वपि व्ययामस्यघायोः परिपन्थिनः ॥ १ ॥
विषूच्येतु कृन्तती पिनाकमिव बिभ्रती । विष्वक्पुनर्भुवा मनो असमृद्धा अघायवः ॥ २ ॥
न बहवः समशकन्नार्भका अभि दाधृषुः । वेणोरद्गा इवाभितोऽसमृद्धा अघायवः ॥ ३ ॥
प्रेत पादौ प्रस्फुरत वहतं पृणतो गृहान् । इन्द्राण्येतु प्रथमाजीतामुषिता पुरः ॥ ३ ॥
पातं न इन्द्रापूषणादितिः पांतु मरुतः । अपां नपात्सिंधवः सप्त पातन पातु नो विष्णुरुत द्यौः ॥ १ ॥

---

१ अ. वे सं ६।६९।१-३। २ अटयवषम-जनं । ३ घ-अपि । ३ ग-प । ४ घटयवअनाई-हे । ५ घटयवअनईर-या, क-पा । ४ अ वे. ९।१।११-१२। ६ अ. वे. सं. १४।१।३५-४०। ७ अ. वे. १४।२७।१-४। ८ अ. वे. ६।११३।१-३

पातां नो द्यावापृथिवी अभिष्टये पातु ग्रावा पातु सोमो नो अंहसः ।
पातु नो देवी सुभगा सरस्वती पात्वग्निः शिवा ये अस्य पायवः ॥ २ ॥
पातां नो देवाश्विना शुभस्पती उषासा नक्तोत न उरुष्यताम् ॥
अपां नपादभिहुती गयस्य चिद्देव त्वष्टर्वर्धय सर्वतातये ॥ ३ ॥
त्वोतारं मे देव्य वच पर्जन्यो ब्रह्मणस्पतिः । पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुस्तरं त्रायमाणं सह ॥१॥
येन सोमादितिः पथा मित्रा वायंत्यद्रुह । तेना नोऽवसा गहि ॥ १ ॥
येन सोम साहन्त्यासुरान् रन्धयासि नः । तेना नो अधिवोचत ॥ २ ॥
येन देवा असुराणामोजांस्यवृणीध्व । तेना नः शर्म यच्छत ॥ ३ ॥
यथा वृक्षं लिबुजा समन्तं परिषस्वजे । एवा परि ष्वजस्व मा यथा मां कामिन्यसो यथा मन्नापगा असः ।१
नमो देववधेभ्यो राजवधेभ्यः । अथो ये विश्यानां वधास्तेभ्यो मृत्यो नमोऽस्तु ते ॥ १ ॥
नमस्ते अधिवाकाय परावाकाय ते नमः । सुमत्यै मृत्यो ते नमो दुर्मत्यै त इदं नमः ॥ २ ॥
नमस्ते यातुधानेभ्यो नमस्ते भेषजेभ्यः । नमस्ते मृत्यो मूलेभ्यो ब्राह्मणेभ्य इदं नमः ॥ ३ ॥
अभयं मित्रावरुणाविहास्तु नो॑ अभयं सोमसविता नः कृणोतु ।
अभयं नोस्तू [1] र्वन्तरिक्षं सप्तर्षीणां च हविषाभयं नो अस्तु ॥
अनमित्रं नो अधरादनमित्रं न उत्तरात् । इन्द्रानमित्रं नः पश्चादनमित्रं पुरस्कृधि ॥ ३ ॥
उर्ध्व ग्रामात्सहस्राक्षो युक्त्वा शपथो रथम् । शप्तारमन्विच्छन्मम वृक इवाविमतो गृहम् ॥ १ ॥
परि णो वृङ्ग्धि शपथ ह्रदमग्निरिवा दहन् । शप्तारमत्र नो जहि दिवो वृक्षमिवाशनिः ॥ २ ॥
यो नः शपादशपतः शपतो यश्च नः शपात् । वृक्ष इव विद्युता हत आमूलादनुशुष्यतु ॥
अनमित्रं नो अधरादनमित्रं न उत्तरात् । इन्द्रानमित्रं नः पश्चादनमित्रं पुरस्कृधि ॥ ३ ॥
मनसे चेतसे धिय आकूतय उत चित्तये । मत्यै श्रुताय चक्षसे विधेम हविषा वयम् ॥ १ ॥
अपानाय व्यानाय प्राणाय भूरिधायसे । सरस्वत्या उरुव्यचे विधेम हविषा वयम् ॥ २ ॥
यमो मृत्युरघमारो निर्ऋत्यो बभ्रुः शर्वोऽस्ता नीलशिखण्डः ।
देवजनाः सेनयोत्तस्थिवांसस्ते अस्माकं परि वृञ्जन्तु वीरान् ॥ १ ॥
मनसा होमैर्हरसा घृतेन शर्वायास्त्र उत राज्ञे भवाय ।
नमस्येभ्यो नम एभ्यः कृणोम्यन्यत्रास्मदघविषा नयन्तु ॥ २ ॥
त्रायध्वं नो अघविषाभ्यो वधाद्विश्वे देवा मरुतो विश्ववेदसः ।
अग्नीषोमा वरुणः पूतदक्षा वातापर्जन्ययोः सुमतौ स्याम ॥ ३ ॥
बृहस्पतिम० स्यमृधु० त्रातारमिन्द्र० इन्द्रः सुत्रामा । अभयं नः कृणोत्विति विशेषः । स सुत्रामा-
स्ववा० तस्य वय । विपरीते १ आमन्द्रैरिन्द्र हरि० । वर्म मे द्यावापृथिवी वर्माहर्वर्म सूर्यः । वर्म
मे विश्वे देवाः क्रन्मा मा प्रापत्प्रतीचिका ॥ ( १९।२।२०।४ )
ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वे देवा नातिविध्यन्ति सर्वे ।
तन्मे तन्वं त्रायतां सर्वतो बृहदायुष्मान् जरदष्टिर्यथासत् ॥ ( ९।५।३।१९ )
गिरयस्ते पर्वता हिमवन्तोऽरण्यं ते पृथिवि स्योनमस्तु ।
बभ्रुं कृष्णां रोहिणीं विश्वरूपां ध्रुवां भूमिं पृथिवीमिन्द्रगुप्ताम् ॥

१ यवटथन-श्वे । २ ईअनघटय-चोतान, ध-त्वो ३ ङ-स्यो । ४ ध-सत्पार ।

१ अ. सं. ६।१।४।१ २ „ ६।१।७।१-३ ३ „ ८।१ ४ अ. सं. ६।११३।१-३ ५—६।१२।४ ६—६।४०।१।३ ७—६।४।३७।१ ८—६।४१।१-२ ९—६।१०।९३।१-३,

यत्ते मध्यं पृथिवि यच्च नभ्यं यास्त ऊर्जस्तन्व. संबभूवु ।
तासु नो धेह्यभिनः १ घत । पवस्व माता भूमि. पुत्रो अहं पृथिव्याः ॥ ( १२।१।११-१२ )
यास्ते प्राची प्रदिशो या उदीचीर्यास्ते भूमे अधराद्याश्च पश्चात् ।
स्योना जोस्ता मह्यं चरते भवतु मा निपप्त भुवने शिश्रियाणः ॥ १ ॥
मा न पश्चान्मा पुरस्तान्नुदिष्ठा मोत्तरादधरादुत ।
स्वस्ति भूमे नो भव मा विदन्परिपन्थिनो वरीयो यावया वध ॥ ३२ ॥ स्वस्त्ययनगणः ॥
स्वस्तिदा विशाम्पतिर्वृत्रहा १ ॥ ( १।४।२१ )
ब्राह्मणेन पर्युक्तासि कण्वेन नार्षदेन । सेनेवैसि त्विषीमती न तत्र भयमस्ति यत्र प्राप्नोष्योषधे ॥
नं ता अर्वारेणु० १ अभयं मित्रा वरुणा० १ अभयं द्यावापृथिवी इहास्तु नोऽभयमस्तु
ददत न. प्रतीचः । मा ज्ञातारं मा प्रतिष्ठा विंदतमिथो विघ्नाना उपयतु मृत्यु ॥ १ ॥
हेत तर्द समकमाखुमश्विना च्छिन्तं शिरो अपि पृष्ठी श्रिणीत ।
यवान्ने ददानपिनह्यत मुखमथाभय कृणुत धान्याय ॥ १ ॥
पूषेमा आस इन्द्र सुत्रामा ५ मैत यथामनु गामीम एषायेन पूर्वं न्वैयथ त ब्रवीमि ।
तथा एतत्पुरुषमाप्रस्त्यामय परस्तादभयं ते अर्वाक् । १ स्वस्तिदा विशाम्पतिः ॥ १ ॥
नमस्ते घोषिणीभ्यो नमस्ते केशिनीभ्यो नमो नमस्कृताभ्यो नम सम्भुञ्जतीभ्य ॥ (११।२।३१ )
अम्ले राष्ट्रमिह रोहितोऽहार्षीद्व्यास्तवन्मृधो अभय ते अभूत ।
तस्मै ते द्यावापृथिवी रेवतीभि काम दुहातामिह शक्वरीभिः ॥ १ ॥ ( १३।१।५ )
इदमुच्छ्रेयोऽवसानमागा शिवे मे द्यावापृथिवी अभूताम् ।
असपत्नाः प्रदिशो मे भवतु न वै त्वा द्विष्मो अभय नो अस्तु ॥ ( १९।२।१४।१ )
यत इन्द्र भयामहे०ऊतिभि' ॥ अभयगणः ।
मां नो विदन्विव्याधिनो मो अभिव्याधिनो विदन् । आरात् शरव्या अस्मद्विषूचीरिन्द्र पातय ॥ १ ॥
विष्वंचो अस्मच्छरवः पंततु ये अस्ता ये चास्या. । देवीर्मनुष्येषवो ममामित्रान्वि विध्यत ॥ २ ॥
यो न स्वो यो अरण' सजात उत निष्ट्यो यो अस्मा अभिदासति ।
रुद्र शरव्ययैतान् ममामित्रान्वि विध्यतु' ॥ ३ ॥
यः सपत्नो योऽसपत्नो यश्च द्विषञ्छपाति न. ॥ देवास्तं सर्वे धूर्वंतु० ॥ ४ ॥
अवारसृजन्तु० १ । यो अद्य सेन्योवधोऽघायनामुदीरते । युवं त मित्रा वरुणावस्मद्यावयं परि ॥२॥
इतश्च यदमुतश्च यद्वध वरुणं यावय । वि महच्छर्म यच्छ वरीयो यावया वध ॥ ३ ॥
शास इत्था महा अमित्रसाहो अस्तृत. । न यस्य० ४ । स्वस्तिदा विशांपति० १ । वि न इन्द्र० १ । अधमं
गमया तमो यो अस्मां अभिदासति । पाहृव्यस्यद्य: । विरक्षो विमृ० । अपेन्द्र द्वि० वि महच्छर्म० ।
२ संशितं त म इद ब्रह्म संशित वीर्यं ५ वल । संशितं क्षत्रमजरमस्तु जिष्णुर्येषामस्मि पुरोहित.
।समहमेषां राष्ट्रं स्यामि समोजो वीर्यं ५ बलं । वृश्चामि शत्रूणां बाहूननेन हविषाहम् ॥२॥ नीचैः पद्य
तामधरे भवतु ये नः सूरिं मघवानं पृतन्यात् । क्षिणामि ब्रह्मणामित्रानुन्नयामि स्वानहम् ॥ ३ ॥

---

१ यटचककघन-स्योना ता, भ-स्योनास्तर । २ अ वे १४।१९, १४।१९ पै—१।४।२१ ४—६।४।२२ ५—६।५।५०।१ नकघर-हतनद, यटअ-हततद, ई-हततांद । ६ टचकअघनार्हर-पूर्वे । ७ बुडयवअनर-भांनो । ८ घडयअन-न यातयः । ९-विष्टं चो । १०—क्षिआति म० । ११-णा । १२-हनटयवकय-अधममेनया, अ-अथाध-अधमगमया । १३ अ वे. ३।१९।१-८, १४ अभ-मघवानं, १५ घअनर-मघवाज, १६ अनअर-क्षुणामि, आर्का-क्षुणामि ।

तीक्ष्णीयांसः परशोरग्नेस्तीक्ष्णतरा उत । इंद्रस्य वज्रात्तीक्ष्णीयांसो येषामस्मि पुरोहितः ॥ ४ ॥
एषामहमायुधा सं स्याम्येषां राष्ट्रं सुवीरं वर्धयामि ।
एषां क्षत्रमजरमस्तु जिष्णवे [१] षां चित्तं विश्वेऽवन्तु देवाः ॥ ५ ॥
उद्धर्षतां मघवन्वाजिनान्युद्वीराणा जयतामेतु घोषः ॥ पृथग्घोषा उलुलयः केतुमंत उदीरतं ॥ ६ ॥
देवा इन्द्रज्येष्ठा मरुतो यन्तु सेनया ॥ ६ ॥
प्रेता जयता नर उग्रा वः संतु बाहव. । तीक्ष्णेषवोऽबलधन्वनो हतोग्रायुधा अबलानुग्रबाहव॰॥७॥
अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते । जयामित्रान्प्र पद्यस्व जह्येषां वरं वरं मामीषां मोचि कश्चन८
त्वया मन्यो सरथमारुजतो हर्षमाणो: । संशिता मरुची । इति विशेषः । सूक्तं० ।
यस्ते मन्यो विद्धद्वज्रसायक सह ओजः पुष्यति विश्वमानुषक् ।
साह्याम दासमार्यं त्वया युजा वयं सहस्कृतेन सहसा सहस्वता ॥ १ ॥
इमा देवसेनाः सूर्यकेतव सचेतसः । अमित्रान्नो जयंतु स्वाहा ॥ (५।४।२१।१२)
अध मन्युरवायताव बाहू मनोयुजा । पराशर त्व तेषां पराञ्च शुष्म मर्दयाधा नो रयि मा कृधि ।१।
निर्हस्तेभ्यो नैर्हस्तं य देवाः शरुमस्यथ युवृश्चामि शत्रूणां बाहूननेन हविषाह ॥ २ ॥
इंद्रश्चकार प्रथमं नैर्हस्तमसुरेभ्य. । जयतु सत्वानो मम स्थिरेणेंद्रेण मेदिना ॥ ३ ॥
निर्हस्तः शत्रुरभिदासन्नस्तु ये सेनाभिर्युधमायन्त्यस्मान् ।
समर्पयेंद्र महता वधेन द्रात्वेषामघहारो विविद्धः ॥ १ ॥
आतन्वाना आयच्छतोऽस्यतो ये च धावथ । निर्हस्ताः शत्रवः स्थनेंद्रो वोऽद्य पराशरैत् ॥ २ ॥
निर्हस्ताः सन्तु शत्रवोऽङ्गैषां ग्लापयामसि । अथैषामिंद्र वेदांसि शतशो वि भजामहै ॥ ३ ॥
परि वर्माणि सर्वत इंद्र पूषा च सस्रतुः । मुह्यन्त्वद्यामू. सेना अमित्राणां परस्तरा ॥ १ ॥
मूढा अमित्राश्चरताशीर्षाण इवाहय. । तेषां वो अग्निमूढानामिंद्रो हन्तु वरंवरं ॥ २ ॥
ऐषु नह्य वृषाजिनं हरिणस्याभियं कृधि ॥ पराङमित्र एषत्वर्वाची गौरुपेषतु ॥ ३ ॥
अभिभूर्यज्ञो अभिभूरग्निरभिभूः सोमो ।
अभिभूरिंद्र अभ्य [१] हं विश्वाः पृतना यथा सान्येवा विधेमाग्निहोत्रा इद हवि. ॥ १ ॥
स्वधास्तु मित्रावरुणा विपश्चिता प्रजावत् क्षत्र मधुपनेह पिन्वत ॥
बाधेथां दूरं निर्ऋतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्यस्मत् ॥ २ ॥
इमं वीरमनु हर्षध्वमुग्रमिंद्रं सखायो अनु संरभध्वं । ग्रामजितं गोजित वज्रबाहुं जयंतमज्म प्रमृणंतमोजसा ।
इंद्रो जयाति न पराजयाता अधिराजो राजसु राजयाते ।
चर्कृत्य ईड्यो वंद्यश्चोपसद्यो नमस्यो भवेह ॥ १ ॥
त्वमिंद्राधिराजः श्रवस्युस्त्वं भूरभिभूतिर्जनानां ॥ त्वं दैवीर्विश इमा वि राजा युष्मत् क्षत्रमजरं ते अस्तु ।२
प्राच्या दिशस्त्वमिंद्रासि राजोतोदीच्या दिशो वृत्रहञ्छत्रुहोसि ।
यत्र यंति स्रोत्यास्तज्जितं ते दक्षिणतो वृषभ एषि हव्यः ॥ ३ ॥

१ धकव्कारुजन-हह्य। २ अनहृयवप-ममीषा। ३ अ. वे. ४।३१।१। ४ अ वे ७।३२।
५ ब-स्त्रीकरमा। ६ अ वे. ६।७।६५, ७ अ. वे. ६।६६, ८ धकयअनहृयव-मर्मदमे। ९ अ. वे.
६।६७। १०-१ अ. वे. ६।९७, ११ कपअमय ग्यासमत्। १२ अ. वे ६।९८,

ओंभि त्वेंद्र वरिमतः पुरा त्वाहूरणाद्धुवे । व्हयाम्युग्र चेत्तार पुरुणामनेकजम् ॥ १ ॥
यो अद्य सेन्यो वधो जिघांस न उदीरते । इंद्रस्य तत्र बाहू समतं परि वृध्म ॥ २ ॥
परि वृध्म इंद्रस्य बाहू समत त्रातुस्त्रायता न । देव सवित सोमराजं सुमनस मा कृणु स्वस्तये ॥ ३ ॥

## अपराजितगण: ॥

यः सपत्नो योऽसपत्नो यश्च द्विषञ् छपाति न' । देवास्त सर्वे धूर्वंतु ब्रह्म० ॥ ( १।१९।४ ),
शर्मवर्म्मैतदाहरास्यै नार्या उपास्तरे । सिनीवालि प्रजायतां भगस्य सुमतावसत् ॥ १४।२।२१ ॥
उद्व ऊर्म्मि. शम्या हन्त्वापो योक्त्राणि मुचत । मादुष्कृतौ व्येनसावघ्न्यावशुनमारताम् ॥ १६ ॥
अघोरचक्षुरपतिघ्नी स्योना शग्मा सुशेवा सुयमा गृहेभ्य ॥
वीरसूर्देवृकामा स त्वयैधिषीमहि सुमनस्यमाना ॥ १७ ॥
इतश्च यदमुतश्च यद्वधं वरुण यावय ॥ वि महच्छर्म यच्छ वरीयो यावया वधं ॥ ( १।२०।३ )
अपेंद्रद्विष० ज्यासतो वधं० । विमहच्छर्म ॥ ( १।२१।४ )
स्यूयं नः प्रवतो नपान्मरुतः सूर्यत्वचस' । शर्मयच्छाथ सप्रथ' ।
इममग्न आयुषे वर्चसे नय प्रियं रेतो वरुणमित्र । माते० ॥ ( २।२८।५ ) ॥
तिस्रो देवीर्महि नः शर्म यच्छत प्रजायै न स्तन्वे [1] यच्च पुष्ट । माहास्महि प्रजया० ॥(५।३।७)
उरुव्यचा नो महिषः शर्म यच्छ । त्वस्मि० ॥ ८ ॥
इंद्रस्य शर्म्मासि । त त्वा प्रपद्ये त त्वा प्रविशामि सर्वगु' सर्वपूरुषः सर्वात्मा सर्वतनूः सह
यन्मे स्वितेन ॥ ( ५।६।१४ ) ॥
अश्मवर्म मेऽसि यो मा प्राच्या दिशोऽघायुरभिदासात् । एतत्सऋच्छात् । यो मां दक्षिणाया. ॥
यो मा प्रतीच्याः० । यो मोदीच्या.० । यो मा ध्रुवाया' । यो मोर्ध्वाया ० ॥
बृहता मन उपव्हये मातरिश्वना प्राणापानौ।सूर्याच्चक्षुरतरिक्षाच्छ्रोत्रं पृथिव्या. शरीरम्॥(५।१०।१-८)
येन देवा असुराणामोजास्यवृणीध्वं । तेना न. शर्म्म यच्छथ ॥ ( ६।१।७।३ )
यथा वृक्ष लिबुजा समतं परिषस्वजे । एवा परिष्वजस्व मां ।
यथा मां कामिन्यसो यथा मन्नापगा असः ॥ ( ६।१।७।१-३ )
यथेमे द्यावापृथिवी सद्यः पर्येति सूर्य. । एवा पर्येमि ते मनो यथा मां काम० ।
यथा सुपर्णः प्रपतन् पक्षौ निहंति भूम्यां । एवा नि हन्मि ते मनो यथा मा काम० ।
वांछ मे तन्व [2] पादौ वाञ्छाक्ष्यौ वाञ्छसक्थ्यौ । अक्षौ वृषण्यत्या केशा मा ते कामेन शुष्यंतु ॥
मम त्वादोषणिश्रिष कृणोमि हृदयश्रिष ॥ ( ६।१।९।१-२ )
यथावतः परागसो मामुष्याहं कदाचन । अनडुद्भ्यस्त्व प्रथम धेनुभ्यस्त्वमरुंधतिः ।
अधेनवे [3] वयसे शर्म यच्छ चतुष्पदे । शर्म यच्छत्वोषधिः सह देवीररुंधती ।
करत्पयस्वं तं गोष्ठमयक्ष्मा उत पुरुषात् । नित्वत्पा सुभगामस्त्याववामि जीवला ॥
सा नो रुद्रस्यास्तां हेतिं दूर नयतु गोभ्य' । तनूहे वाजिं तन्वहमम्यधावतु शर्म तुभ्य ॥
अपहतो महोधरुणाय यद्वोदिवीव ज्योतिस्वामिमीयात् ॥
वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे ॥

---

१ अ वे. ६।९९ । २ भ-वर्चसः यकयअनर्हारस्त्व-त्वसस । ३ भ-१ । ४ अ. वे. ८।२।७ ।

यस्य उपस्था उर्वा ̲ तरिक्षं । सा नः शर्म त्रिवरूथं नियच्छात् ।
देशानां पत्नीरुशती ०̲ यच्छतु समातौ ।
अधिब्रूहि मा रमथा सृजे तवैव सन्त्सर्वहायाइहास्तु ॥
भवाशर्वौ मृड त शर्म यच्छ मयासिष्यदुरित धत्तमायुः ।
रक्षोहण वाजि० १ ।

स्वाक्ति मे द्यावापृथिवी स्वाक्ति मित्रो अकरयं॥ स्वाक्ति मे ब्रह्मणस्पति स्वाक्ति सविताकरत् ॥७।३०॥
वर्म मे द्यावापृथिवी स्वस्त्ययनोक्ता १ । ऐंद्राग्न वर्म० १ इयमपि तत्र ॥

वर्म मह्यमय मणि फालाज्जात' करिष्यति । पूर्णोमथेन मागमइसेन सह वर्चसा ।
'मित्र' पृथिव्योदक्रामत्ता पुर' प्रणयामि वः।तामाविशतता प्रविशत सा व शर्म च वर्म यच्छतु ।
वायुरंतरिक्षेणोद्० ।सूर्योदिवो० । चद्रमानक्षत्रैरु० । सोम ऽ'षधीरु० । यज्ञोदक्षिणाभिरु० । समुद्रो
नदीभिरु० । ब्रह्म ब्रह्मचारिभिरु० । इन्द्रो वीर्येणो० । देवा अमृतेणो० । प्रजापति प्रजापतिभिरु० ॥
अप म्यधु पौरुषेयं वध यमिंद्राग्नी धाता सविता बृहस्पतिः ।
सोमो राजा वरुणो अश्विना यम पूषास्मान्परिपातु मृत्यो' ॥ १ ॥
यानि चकार भुवनस्य यस्पति. प्रजापतिर्मातरिश्वा प्रजाभ्यः ।
प्रदिशो यानि वसते दिशश्च तानि मे वर्माणि बहुलानि सतु ॥ २ ॥

यत्ते तनूष्वनह्यत देवा धुराजयो देहिनः । इंद्रो यच्चक्रे वर्म तदस्मान्पातु सर्वतः ॥ ३ ॥
वर्म मे द्यावापृथिवी स्वस्त्ययनोक्ता ।
अपेसपत्नं पुरस्तात्पश्चान्नो अभय कृत । सविता दक्षिण उत्तरान्माशचीपति ॥ १ ॥
दिवो मादित्या रक्षतु भूम्या रक्षंत्वग्नय: । इद्राग्नी रक्षता मा पुरस्तादश्विनावभित शर्म यच्छता ।
तिरश्चीनघ्न्या रक्षतु जातवेदा भूतकृतो मे सर्वत सतु वर्म ॥ २ ॥ इति शर्मवर्म्मगण ।

अथ पूर्वोक्ता अशीत्युत्तरशत श्लोका' ॥

सुरास्त्वामभिषिंचेतु ब्रह्मविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा सकर्षणो विभु ॥ १ ॥
प्रद्युम्नश्चानिरुद्धश्च भवतु विजयाय ते । आखंडलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥ २ ॥
वरुण' पवनश्चैव धनाध्यक्षस्तथा शिव ।ब्रह्मणा सहित शेषो दिक्पाला' पातु ते सदा ॥ ३ ॥
रुद्रो धर्मो मनुर्दाक्षी रुचि' श्रद्धा तु पार्थिव । भृगुरत्रिर्वसिष्ठश्च सनकश्च सनंदन ॥ ४ ॥

सनत्कुमारश्च तथा भगवानपि चांगिराः । पुलहश्च पुलस्त्यश्च मरीचिः कश्यपः प्रभु ॥ ५ ॥
एते त्वाममिषिंचंतु प्रजाध्यक्षा. समागता. । प्रभाकरा बर्हिषदो अग्निष्वात्तास्तथैव च ॥ ६ ॥
क्रव्यादाश्चोपहूताश्च आज्यपाश्च सुकालिनः । एते त्वामभिषिंचतु पितरश्चाग्निभिः सह ॥ ७ ॥
लक्ष्मीर्वेदी शची ख्यातिरनसूया तथा स्मृतिः । सभूति. सन्नतिश्चैव क्षमा प्रीतिस्तथैव च ॥ ८ ॥

---

१ घअनर्हरयट—फलाज्जात. । २ अ वे १९।१९।१-११ । ३ अ वे १९।२० । ४ घ-धाता ।
५ अ. वे. १९।१६।१-२ । ६ घ-च्युत ।

स्वाहा स्वधा च ते राजन्नभिषिंचतु मातरः[1] । कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिर्लक्ष्मीस्तथा क्रिया ॥ ९ ॥
बुद्धिर्लज्जा वपुः शान्तिस्तुष्टि[2] सिद्धिश्च पार्थिव । एतास्त्वामभिषिंचंतु धर्मपत्न्यः समागताः ॥१०॥
अरुंधती वसुर्यामी लंबाभानुर्मरुत्वती । संकल्पा च मुहूर्ता च साध्या विश्वा तथैव च ॥ ११ ॥
धर्मपत्न्यो दशान्यास्त्वामभिषिंचंतु पार्थिव । अदितिर्दितिर्दनु काला सुहृष्टानायुषामुनिः ॥ १२ ॥
कद्रू क्रोधवशा प्राची विनता सुरभिस्तथा । एतास्त्वामभिषिंचंतु कश्यपस्य प्रिया प्रिय[3] ॥ १३ ॥
पत्नी ते बहुपुत्रस्य सुपुत्रा या च भामिनी । समायात्वभिषेकाय विजयाय च पार्थिव ॥ १४ ॥
कृशाश्वपत्नी च तथा सुप्रभा तु जया तथा । सुदर्शना तयोः पुत्रो विजय विदधातु ते ॥ १५ ॥
मनोरमा भानुमती विशाला या च बाहुदा । अरिष्टनेमिपत्न्यस्त्वामभिषिंचंतु पार्थिव ॥ १६ ॥
कृत्तिका रोहिणी देवी विशाखा च तथा नृप । अनुराधा तथा ज्येष्ठा मूल च वसुधाधिप ॥१७॥
आषाढा च तथा पूर्वा तथा या चोत्तराह्वया । अभिजिच्च तथा श्रुत्या धनिष्ठा च तथैव च ॥१८॥
तथा शतभिषक् चैव पूर्वाभाद्रपदा तथा । उत्तरा रेवती राजन् अश्विनी भरणी तथा ॥ १९ ॥
एतास्त्वामभिषिंचतु सोमपत्न्यः समागता । मृगी च मृगचर्मा च श्वेतभद्रेश्वरा हरि[4] ॥ २० ॥
पूता च कपिता दंष्ट्रा सुरभा सुरूमा तथा । एताः पुलस्त्यपत्न्यस्त्वामभिषिंचंतु पार्थिव ॥ २१ ॥
श्येनी भासी तथा क्रौंची धृतराष्ट्री तथा शुकी । पत्न्यस्त्वामभिषिंचतु अरुणस्यार्कसारथेः ॥ २२ ॥
आयतिर्नियतिश्चैव रात्रिनिद्रा च पार्थिव । एतास्त्वामभिषिंचतु लोकसस्थानहेतव ॥ २३ ॥
उमा सेना शची चैव धूमोर्णा निर्ऋतिस्तथा । गौरी शिवा च बुद्धिश्च वलपा चैव नंदना ॥ २४ ॥
आनृक्या च तथा ज्योत्स्ना या च देवी वनस्पतिः । एतास्त्वामभिषिंचतु कालस्यावयवाः शुभा ॥ २५ ॥
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः । ग्रहास्त्वामभिषिंचंतु राहु केतुश्च तर्पिताः ॥
स्वायंभुवो मनो पुत्रो मनु स्वारोचिषस्तथा । औत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥
वैवस्वतोथ सावर्णो दक्षब्रह्मसुतावुभौ । धर्मपुत्रो रुद्रपुत्रो रौच्यो भौत्यश्च यो मनुः ॥
एते त्वामभिषिंचतु मनवश्च चतुर्दश ॥
विश्वभुग्विश्वपाश्चित्रसुशांत ससुखी विभुः । मनोजवस्तथौजस्वी बलिरद्भुतमांतिको ॥
वृषश्च कतिधामा च दिविस्पृक् शुचिरेव च । एते त्वामभिषिंचंतु देवपालाश्चतुर्दश ॥
रेवतश्च कुमारश्च तथा वर्चाः कुमारकः । वीरभद्रश्च नदी च विश्वकर्मा पुरोजवः ॥
एते त्वामभिषिंचतु सुरमुख्याः समागता । आत्मा ह्यासुमतो दक्ष पटु प्राणस्तथैव च ॥
हविष्यश्च गविष्ठश्च ऋत सत्यश्च पार्थिव । अभिषिंचतु राजस्त्वा देवा ह्यंगिरसो दश ॥
क्रतुर्दक्षा वसु सत्यः कालकामौ मुनिस्तथा । धृतिमान्मनुजश्चैव रोचमानस्तथैव च ॥
एते त्वामभिषिंचतु विश्वेदेवास्तथा दश ॥
अजैकपादहिर्बुध्न्यः पुष्पकेतुस्तथा बुधः । भरतश्च तथा मृत्युः कापालिरथ किंकिणिः ॥
एकादशैते रुद्रास्त्वामभिषिंचतु पार्थिव ॥
भुवनो भावनश्चैव सुजन्यः सुजनस्तथा । क्रतु सुवर्णवर्णश्च व्यजश्च व्यसुतस्तथा ॥
प्रसवश्चाव्ययश्चैव दक्षश्च मनुजाविप । एते त्वामभिषिंचतु भृगवो नाम देवताः ॥
मनोप्ररुश्च प्राणश्च नरोपानश्च वीर्यवान् । चितिर्हयो नयश्चैव हसो नारायणस्तथा ॥
विभुश्चापि द्विविश्रेष्ठस्तथान्यश्च जगद्धितः । एते त्वामभिषिंचंतु साध्या द्वादश पार्थिव ॥
धाता मित्रोऽर्यमा पूषा शक्रोऽंशो वरुणो भग । त्वष्टा विवस्वान्सविता विष्णुर्द्वादशमः स्मृतः ॥

१ धक्ष–हला स्वाभिरैव । २ घअनर्हरवदय वरा । ३ धस मुंसा । ४ क्षक्ष एतेस्त्वां ।

ऐते त्वामाभिषिंचंतु काश्यपा दितिसंभवाः ॥
एकद्वित्रिचतुर्ज्योतिः पंचज्योतिस्तथैव च । एकशक्रो द्विशक्रश्च त्रिशक्रश्च महाबलः ॥
इंद्रश्च गत्या हश्यते ततः प्रतिसकृत्तथा । मितश्च संमितश्चैव अमितश्च महाबलः ॥
ऋतजित्सत्यजिच्चैव सुषेणः इयेनजित्तथा । अतिमित्रस्तथामित्रः पुरुजिच्चापराजितः ॥
ऋतश्च ऋतवान् धाता वरुणो विधृतो ध्रुवः । विधारणो महातेजा वासवस्य परः सखा ॥
ईदृगन्यादृशश्चैव एतादृगमिताशनः । क्रीडनश्च तथा शक्तिः सभरश्च महायशाः ॥
धातुग्रो मुनिर्भीमो अतिमुक्तः क्षिपः सहः । द्युतिर्वपुरनाधृष्यो वास कामो जयो विराट् ॥
एते त्वामभिषिंचंतु मरुतश्च समागताः । देवा ह्येकोनपंचाशन्महाबलपराक्रमाः ॥
चित्रांगदश्चित्ररथश्चित्रसेनश्च वीर्यवान् । ऊर्णायुरनघश्चैव उग्रसेनश्च वीर्यवान् ॥
धृतराष्ट्रश्च सोमश्च सूर्यवर्चास्तथैव च । दुरावस्तुष्णयः कीर्णिर्नंदिश्चित्रस्तथैव च ॥
कलिश्चाप्यगिरा राजन् पर्जन्यो नारदस्तथा । वृषपर्वा च हंसश्च हाहाहूहूस्तथैव च ॥
विश्वावसुस्ताम्रकश्च तथा च सुरुचिश्च यः । एते त्वामभिषिंचतु गंधर्वाः पृथिवीपते ॥
आहूत्यः शोभयंत्यश्च वेगवत्यस्तथैव च । आप्नुवत्यस्तथोर्जश्च तथा वैकुरुपद्मभाः ॥
बभ्रवश्चामृतरुचो भुवश्चैव रुचस्तथा । भीरवः शोचयंत्यश्च दिव्या ह्यप्सरसां गणाः ॥
एतास्त्वामभिषिंचंतु कामिन्यस्तरुणाप्रिया. ॥
अनुसमा सुरूपा च सुकेशी च मनोवती । मेनका सहजन्या च पर्णाशा पुंजिका स्थला ॥
क्रतुस्थला घृताची च विश्वाची पूर्वचित्त्यपि । प्रम्लोचाथाप्यनुम्लोचा रंभा चैवोर्वशी तथा ॥
पंचचूडा सामवती चित्रलेखा तु पार्थिव । मिश्रकेशी सुगंधिश्च विद्युत्पर्णा तिलोत्तमा ॥
अद्दष्टलक्ष्मणा क्षेमा आसिता रुचिका तथा । सुव्रता च सुबाहुश्च सुघोषा सुवपुस्तथा ।
पुंडरीकामुवारा च सुराधा सुरसा तथा । हेमा सरस्वती चैव कामला सूनृतालया ॥
सुमुखा हंसपादी च वासोली रतिलालसा । एतास्त्वामभिषिंचतु राजन्नप्सरस शुभाः ॥
प्रह्लादश्च महातेजास्तथा राजन् विरोचनः । धन्वी बाणस्तथान्ये च दितिपुत्राः समागता. ॥
आभिषिंचंतु दैत्याश्च दिव्येऽन्याप्यंभसा स्वयं ॥
विप्रचित्तिमुखाः सर्वे दानवास्त्वा समागताः । अभिषिंचतु राजान राज्यं कर्तुं सुसत्वरा. ॥
हेत्यश्चैव प्रहेत्यश्च सलिलेंद्रस्तथैव च । सुकेशी पौरुषेयश्च यज्ञहा पुरुषादकः ॥
विद्युत्सूर्यस्तथा व्याघ्रो वधश्च रसनस्तथा । एते त्वामभिषिंचतु समागम्याद्य राक्षसाः ॥
सुसिद्धो माणिभद्रश्च सुमनो नंदनस्तथा । कंडूतिः पंचमश्चैव मणिमान्वसुमांस्तथा ॥
सर्वानुभूतिः शखश्च पिंगाक्षश्चतुरस्तथा । यमो मंदरसो भीम. पद्मचंद्रः प्रभाकरः ॥
मेघवर्णश्च भव्यश्च प्रद्योतश्च महायशा । भूतिमान्केतुमांश्चैव मौलिमाश्च चतुर्दश: ॥
श्वेतश्च विपुलश्चैव प्रद्युम्नश्च जयावह । पक्षयक्षो बलाकश्च कुमुदश्च बलाहकः ॥
पद्मनाभ. सुगंधश्च सुवीरो विजयाकृतिः । पौर्णमासो हिरण्याक्ष. शतजिह्वश्च वीर्यवान् ॥
एते त्वामभिषिंचंतु राजपुत्राश्च सत्तमाः ॥

---

१ ह्रा–पु. २ ह्रा–जा

हंस पद्मश्च राजेंद्र मकर' कच्छपस्तथा । महापद्मश्च नीलश्च सर्वः कुंदो मुकुंदकः ॥
एते त्वामभिषिंचंतु निधयस्तु समागता ॥
छगलाश्चैकवक्त्राश्च ये च सूचीमुखा नृपाः । दुःपूरणा विषादाश्च ज्वलनागारकास्तथा ॥
कुंभमात्रा प्रतुद्राश्च उपवीरा उलूखला । अकर्णाश्चकर्तब्धाश्च तथा ये पोत्रपाणयः ॥
पांसवश्च वितुडाश्च विपुणा, स्कंदनास्तथा । एते त्वामभिषिंचतु पिशाचाना तु जातयः ॥
ब्रह्मचर्ये स्थिता दांता' सर्वज्ञाः सर्वदर्शिनः । नानाप्रकारवक्त्रा नानाबाहुशिरोधराः ॥
चतुष्पथपराद्वारलशून्यालयनिकेतनाः । त्रिपुरारिं भव देव ये मता मनुजेश्वर ॥
ते त्वामथाभिषिंचंतु गणा भूतपतेः स्वय ॥
महाकाल पुरस्कृत्य नरसिंहं च मातर. । सर्वास्त्वामभिषिंचंतु राजराज्ये नराधिप ॥
ग्रहः स्कंदो पिशाचश्च नैगमेयस्तथैव च । माभिषिंचंतु राजस्त्वां सर्वे स्कंधग्रहा, शुभाः ॥
डाकिन्यो याश्च योगिन्य खेचर्यो भूचरास्तथा । सर्वास्त्वामभिषिंचतु समेत्य मनुजेश्वर ॥
गरुडश्चारुणश्चैव अरुणिश्च महाखगः । संपाती विनतश्चैव विष्णुर्गंधकुमारक' ॥
एते त्वामभिषिंचंतु सुपर्णाः पृथ्विपते ।
अनंतश्च महानागो वासुकि. शेषतक्षकौ । सुपर्णारिश्च कुंभश्च वामनोथांजनोत्तम ॥
ऐरावतो महापद्मः कंबलाश्वतरावुभौ । ऐलापत्रश्च सखश्च कर्कोटकधनंजयौ ॥
महाकर्णो महानीलो धृतराष्ट्रबलाहकौ । कुमार. पुष्पदंतश्च गंधर्वश्च मनस्विकः ॥
नहुष. खररोमा च शंखपालस्तथैव च । पद्मश्च कुलिकश्चैव पाणिरित्येवमादय. ॥
नागास्त्वामभिषिंचतु राजराज्ये नराधिप ॥
कुमुदैरावतौ पद्मः पुष्पदंतोऽथ वामनः । सुप्रतीकोंऽजनो नीलः पातु त्वां सर्वतो द्विपा ॥
पैतामहास्तथा हंसा वृषभ. शांकरस्तथा । उच्चैःश्रवाश्चाश्वपतिस्तथा धन्वन्तरिर्नृप ॥
कौस्तुभ शस्त्रराजश्च पातु त्वा सर्वतः सदा । चक्रं त्रिशूलं वज्रश्च नंदकोऽस्त्राणि चाप्यथ ॥
सर्वेऽभिषेक दत्वा च दिशंतु विजय ध्रुव ॥
धर्मश्च वृद्धशास्त्राश्च सत्यं दान तपस्तथा । यशो यज्ञास्तथैवायुर्ब्रह्मचर्यं दमः शम. ॥
एते त्वा माभिषिंचंतु चित्रगुप्तश्च पार्थिव । दंड' पिंगलकश्चैष मृत्यु' कालांतकावुभौ ॥
वालखिल्यास्तथा सर्वे भवंतु विजयाय ते ॥
दिग्धेनवश्चतस्त्वां सुरभिश्च तथा नृप । अभिषिंचतु सर्वाभिर्गोभिः सार्द्धं नरेश्वर ॥
वेदव्यासश्च वाल्मीकि' शमनोऽथ पराशरः । देवल' पर्वतश्चैव दुर्वासा भासुरि शुचि ॥
याज्ञवल्क्यः सजाबालिर्जमदग्निः शुचिश्रवाः । विश्वामित्रः स्थूलकच्छो वर्द्धनोऽत्रिर्विदूरथः ॥
एकतश्च द्वितश्चैव त्रिता गौतमगालवौ । शांडिल्यश्च भरद्वाजो मौद्गल्यो वेदवाहनः ॥
वृहदश्वः कुं[illegible]मठो जपजानुर्घटोदरः । यवक्रीतोऽथ रैभ्यश्च आरमा वामश्च जैमिनिः ॥
ऋषि. सारंगवश्चैव तथागस्त्यो महातपाः । धुधुमुंधुर्मिशश्चैव इंद्रबाहुर्महोदर्यः ॥
कात्यायनश्च कण्वश्च वलाकश्चोमनंदनः । एते त्वामभिषिंचंतु मुनयः पार्थिवोत्तम ॥
पृथुर्दिलीपो भरतो दुष्यंतः शत्रुजिद्बली । मनु' ककुत्स्थश्चानेना युवनाश्वो जयद्रथः ॥

---

१ घडब-ङ्ग । २ घ—णकाणय; ङख—पात्रपाणय. । ३ घयङअब—एकवि ।

मांधाता मुचकुंदश्च तथा राजा पुरूरवाः । इक्ष्वाकुश्च यदुश्चैव पुरुर्भूरिश्रवास्तथा ॥
अंबरीषश्च नाभागो वृहदश्वो महाहनु । प्रद्युम्नश्चाथ सुद्युम्नो भूरिद्युम्नश्च संजयः ॥
एते चान्ये च राजानस्तव राजन् दिवंगता । समायात्वभिषेकाय विजयाय तथा श्रियै ॥
पर्जन्याद्यास्तथा भूप मेघाः सर्वे समागताः । द्रुमाश्चौषधयो रत्न बीजानि विविधानि च ॥
सर्वे त्वामभिषिंचंतु राजराज्ये सुसत्वरा ॥
पुरुषश्चाप्रमेयात्मा महाभूतानि यानि च । पृथिवीवायुराकाशमापोज्योतिस्तथैव च ॥
मनो बुद्धिस्तथैवात्मा अव्यक्तश्च महीपते । एते त्वामभिषिंचंतु समेता वसुधाधिप ॥
रुक्मभौम. शिलाभौम पातालो नीलमृत्तिकः । पीतरक्तासिताश्चैव श्वेतभौमास्तथैव च ॥
एते त्वामभिषिंचंतु विजयाय महीपते ॥
भूर्लोकोऽथ भुवर्लोक स्वर्लोकोऽथ महर्जनः । तप सत्यं च राजेंद्र विजयाय भवंतु ते ॥
जंबू शाक कुशः क्रौंच. शाल्मलीद्वय एव च । प्लक्षश्च पुष्करश्चैव स्वस्वाम्य प्रदिशंतु ते ॥
उत्तरा कुरवः पुण्या रम्या हैरण्वतास्तथा । भद्राश्वः केतुमालश्च वर्षश्चैव इलावृत ॥
हरिवर्ष. किंपुरुषो वर्षो भारतसंज्ञक. । एते त्वामभिषिंचतु समेत्य वसुधाधिप ॥
इक्षुद्वीपः कसेरुश्च ताम्रवर्णो गभस्तिमान् । नागद्वीपस्तथा सौम्यो गंधर्वो वरुणस्तथा ॥
अय च नवमस्तेषा स्वस्वाम्यं प्रदिशतु ते ॥
हिमवान् हेमकूटश्च निषधो नील एव तु । श्वेतशृंगोगवान्मेरुर्माल्यवद्गंधमादना ॥
महेंद्रो मलय सह्य शुक्तिमानृक्षवास्तथा । विंध्यश्च पारियात्रश्च सर्व एव महीधराः ॥
समागम्याभिषिंचतु त्वामद्य वसुधाधिप ॥
ऋग्वदोऽथ यजुर्वेद सामवेदस्तथैव च । अथर्ववेदो वेदास्त्वां अभिषिंचतु पार्थिव ॥
इतिहासो धनुर्वेदो गांधर्वश्चायुसंज्ञितः । सप्तापवेदाश्च तथा विजयाय भवतु ते ॥
शिक्षा कल्पो व्याकरणं निरुक्त ज्योतिषां गतिः । छंदो विविंतिषष्ठानि विजयाय भवतु ते ॥
अंगानि वेदाश्चत्वारो मीमांसान्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्या त्येताश्चतुर्दश ॥
साख्ययोगः पांचरात्रो वेदः पाशुपतं तथा । कृतांतपचक चैव शास्त्राणि विविधानि च ॥
गायत्री पापशमनी गगा देवी महा शिवा । गांधारी च तथा नारी विजय प्रदिशतु ते ॥
देवदानवगंधर्वा यक्षराक्षसपन्नगा. । ऋषयो मनवो गावो देवमातर एव च ॥
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणा । अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ॥
औषधानि च रत्नानि कालस्यावयवाश्च ये । स्थानानि च समस्तानि पुण्यान्यायतनानि च ॥
जीमूतानि च सर्वाणि तद्विकाराश्च सर्वश । उक्तानि चाप्यनुक्तानि विजयाय भवतु ते ॥
लवणक्षारतोयाश्च घृतमंडोदकास्तथा । दधिमंडोदकाश्चैव सुरोदश्च नराधिप ॥
तथैवेक्षुरसोदश्च तथा स्वादूदकश्च यः । गर्भोदकश्च तोयैस्त्वामभिषिंचतु पार्थिव ॥
चत्वारः सागराश्चैव स्वेन तोयेन पार्थिव । समागम्याभिषेके तु विजयं प्रदिशतु ते ॥
पुष्करश्च प्रयागश्च प्रभासो नैमिष तथा । तथा ब्रह्मसर पुण्यं गयाशीर्ष च पार्थिव ॥
कालोदको नंदिकुंडस्तथैवोत्तरमानस । स्वर्गमार्गप्रदश्चैव तथा पचनदश्च य ॥

---

१ क्ष पाठ । २ अमयग्रय—पति । ३ क्ष-त्रिचिति । ४ क्ष-कपमिनी । ५ ध-मु यो

भृगुतीर्थं प्रभासश्च तथैवामरकटक॰ । आश्रम. कालिकायाश्च तृणबिंदोस्तथाश्रम॰ ॥
गोतीर्थं चाग्नितीर्थं च विमलः स्वर्ग एव च । जंबूमार्गश्च विमल पुण्यस्तंदुलिकाश्रम ॥
कपिलश्च तथा तीर्थो तीर्थो वातिकखाढिका । महासरस्तथागस्त्यकुमारीतीर्थमेव च ॥
अगद्वारःकुशावर्तो बिल्वको नीलपर्वतः । वाराह पर्वतश्चैव तीर्थं कनखल तथा ॥
सुगधा च धरा कुमास्तथा शाकभरीति या । भृगुतुग सकुब्जाम्रः कपिलस्य तथाश्रम ॥
चमसोद्भेदन पुण्यस्तथा विनशन शुभ॰ । अनतुगश्च मोचश्च अश्वगधश्च पार्थिव ॥
कालजर सकेदारो रुद्रकोणिस्तथैव च । महालयश्च राजेंद्र बदर्याश्रम एव च ॥
नदा च सोमतीर्थं च सूर्यतीर्थं शतक्रतोः । अश्विनोर्वरुणस्याथ वायोर्वैश्रवणस्य च ॥
ब्रह्मणश्चैव शर्वस्य यमस्य च्यवनस्य च । विरूपाक्षस्य धर्मस्य तथा चाप्सरसा नृप ॥
ऋषीणा च वसूना च साध्याना मरुतां तथा । आदित्याना च रुद्राणा तथा चागिरसा नृप ॥
विश्वेदेवभृगूणा च तथान्येषा च मानद । प्लक्षप्रस्रवणश्चैव सुपुत्रा च नराधिप ॥
शालग्रामसरश्चैव वाराहो मानसस्तथा । कामाश्रमस्त्रिकूटश्च चित्रकूटस्तथैव च ॥
सपूर्व॰ क्रतुसारश्च तथाविष्णुपदं सरः । कापिलं च तथा तीर्थं वासुकेस्तीर्थमेव तु ॥
सिंधूत्तमस्तपोद्वारोऽप्यथ सूर्यारकुमकः । पुडरीकश्च राजेन्द्र गगासागरसगम ॥
सिंधुसागरयोश्चैव संगमः सुमनोहर । तथा कुंभामसुदश्च मानसं च तथा सरः ॥
तथा बिदुसर पुण्य सरस्वच्छोदकं तथा । धर्मारण्य फल्गुतीर्थमविमुक्त तथैव च ॥
लौहित्यश्च तथा पुण्यो बदरी पावनः शिव । तीर्थं सप्तर्षीणां च वन्हितीर्थं तु पार्थिव ॥
पुण्यवस्त्रापथो मेषछागलेशस्तु पार्थिव । पुष्पन्यासस्तथा चैव तीर्थो हसपदस्तथा ॥
अश्वतीर्थश्च कर्णाश्वो मणिमथस्तथैव च । देविका इन्द्रमार्गश्च स्वर्णबिन्दुस्तथैव च ॥
आहत्यकस्तथा तीर्थस्तीर्थश्चैरावतस्तथा । ऐरावतीसमुद्भेदे तीर्थं भोगयश.पर ॥
करवीराव्हय चैव नागमो वणिकस्तथा । पापमोचनिकश्चैव ऋणमोचनिकस्तथा ॥
उद्वेजनस्तथा पुण्य. सपूज्यः सरसा वरः । देवब्रह्मसर पुण्य सर्पिर्दधि तु पार्थिव ॥
एते चान्ये च बहवः पुण्यसकीर्त्तना. शुभा. । तोयैस्त्वामभिषिंचतु सर्वपातकनाशनैः ॥
गगा महानदी पुण्या ह्रादिनी ह्लादिनी तथा । पावनी च तथा सीता चक्षु सिंधुश्च नर्मदा ॥
सुप्रभा काचनाक्षी च विशाला मानसी ह्रदा । सरस्वत्योघनादी च सुवेषा विमलोदका ॥
शिप्रा शोणश्च तर्षश्च सरयूर्गडकी तथा । अच्छोदा च विभागा च चन्द्रभागा इरावती ॥
वितस्ता देविकारमा केशा वेत्रह्रदा शिवा । तथा चेक्षुमती पुण्या कौशिकी यमुना तथा ॥
गोमती धूतपापा च बाहुदा तु सरस्वती । निर्विन्ध्या च तृतीया च लौहितश्च महानद. ॥
देवस्मृतिर्वेदमाता वेत्रघुर्घुरदा तथा । पर्णाशा वदना चैव सदानीरा कुमुद्वती ॥
पीता चर्मण्वती धूमा विदर्भा वेणुमत्यपि । अवती च तथा कुती सुरसा च पलाशिनी ॥
मदाकिनी दशार्णा च सिंधुरेखा कुमुद्वती । तपती पिप्पली श्येनी करतोया पिशाचिकी ॥
चित्रोपला चित्रवर्णा मजुला वाकुलामती । शुक्तिमती सिनीवाली मद्भूणी तृपिका कपू ॥
तापी पयोष्णी निर्विंध्याअसिता च निषधावती । वेणा वैतरिणी भीमा मव एव तथा कुहू. ॥

१ क रि । २ टचकघअमय-धनाशं । ३ घयअमसख भांगत्यों । ४ झ--र ट-पटौघाः

तोया चैव महागौरी दुर्गतिर्मिंगिला तथा । गोदावरी भीमरथी कृष्णवर्णा भयंकरा ॥
तुंगभद्रा सुप्रकारा वाह्या कावेरिरेव च । कृतमाला ताम्रवर्णी पुष्पभद्रोत्पलावती ॥
नृसमा ऋषिकुल्या च इक्षुका त्रिदिवालया । लांगुलिनी वंशधरी जम्बूश्च सुकलावती ॥
ऋषिका वरवेगा च मदंगा मद्रवाहिनी । क्षमा देवी दया व्योमा पयोष्णी कालवाहिनी ॥
कपना च विशाला च करतोया सुवाहिनी । ताम्रारुणा वेत्रवती सुभद्रा चाश्ववत्यपि ॥
अद्रिका च इमा चैव सुप्रकारा हिरण्मयी । आपगालोपलाभासी सध्या तु वहवानदी ॥
महेंद्रवाणी शाला च मालिका वलयावती । नीलोत्पलकरा चैव बाहुदा वनवासिनी ॥
नदा चापरनंदा च सुनदा वसुवासिनी । एताश्चान्याश्च राजेंद्र नद्यस्त्वां विविधोदका. ॥
सर्वपापप्रशमनाः सर्वलोकस्य मातरः । सतोयपूर्णैः कलशैरभिषिंचंतु पार्थिव ॥
एतैर्यथोक्तैर्नृपराजराज्ये दत्ताभिषेकः पृथिवीं समग्रां ।
ससागरां भुंक्ष्व चिरं च जीव । धर्मे च ते बुद्धिरतीव चास्तु ॥
इति श्रीमद्भशंकरात्मजभट्टनीलकण्ठकृते राजनीतिमयूखे राज्याभिषेकप्रयोगः ॥

एवं कृताभिषेको राज्यं कुर्यात् । तच्च सप्तांगं ॥ तानि च 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि चेति' ॥ कामंदकोऽपि । ( १।१६ )

"स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् । एतावदुच्यते राज्यं सत्वबुद्धिव्यपाश्रयं ॥"

नीतिशास्त्रस्य दृष्टार्थत्वात्क्रमेऽभिनिवेशः कार्यः । तत्र स्वामी राजा ।

तत्र देवानामंशाः संतीत्याह मनुः ( ७।४ )

"इंद्रानिलयमार्काणामग्नेश्च वरुणस्य च । चंद्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥
"यस्मादेषां सुरेंद्राणां मात्राभ्यो निर्मितो नृपः । तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥
'सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट् । स महेंद्रः स ईशः स कुबेरश्च प्रभावतः" ॥ इति ॥

कामंदकोऽपि ( १।९–११, १३–१५ )

"राजाऽस्य जगतो हेतुर्वृद्धेर्वृद्धाभिसमतः । नयनानन्दजननः शशांक इव तोयधेः ॥
"यदि न स्यान्नरपतिः सम्यक् नेता ततः प्रजा । अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥
"धार्मिकं पालनपरं सम्यक्परपुरंजयं । राजानमभिमन्यन्ते प्रजापतिमिव प्रजाः ॥
"न्यायप्रवृत्तो नृपतिरात्मानमथ च प्रजाः । त्रिवर्गेणोपसंधत्ते निहंति ध्रुवमन्यथा ॥
"धर्माद्वै यवनो राजा विहाय बुभुजे भुवं । अधर्माच्चैव नहुषः प्रतिपेदे रसातलं ॥
"तस्माद्धर्मं पुरस्कृत्य यतेतार्थाय पार्थिवः । धर्मेण वर्द्धते राष्ट्रं तस्य स्वादु फलं श्रियः ॥"

राजगुणास्तदुक्तं च नीतिसारे ( कामंदकीये १–१८–२० )

"न्यायेनार्जनमर्थस्य रक्षणं वर्धनं तथा । सत्पात्रप्रतिपादनं च राजवृत्तं चतुर्विधं ॥
"नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः । विनयो हीन्द्रियजयस्तद्युक्तः शास्त्रमृच्छति ।"

तथा ( १।२१–२५ )

"शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता । उत्साहो वाग्मिता दार्ढ्यं आपत्क्लेशसहिष्णुता ॥
"प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता । कुलं शीलं दमश्चेति गुणाः संपत्तिहेतवः ।

---

१ अधममवर–विधिवाक्या । ३ श–आ ।

“ आत्मान प्रथम राजा विनयेनोपपादयेत् । ततोऽमात्यास्ततो भृत्यान् तत पुत्रांस्ततः प्रजा ॥
“ सदानुरक्तप्रकृति प्रजापालनतत्परः । विनीतात्मा हि नृपतिर्भूयसीं श्रियमश्नुते ॥
“ प्रकीर्णविषयारण्ये धावत विप्रमाथिन । ज्ञानाङ्कुशेन कुर्वीत वश्यमिंद्रियदंतिन ॥ ”
तथा ( १।२७,३६–३८,४० )
“ विषयामिषलोभेन मन प्रेरयतींद्रिय । तन्निरुध्यात्प्रयत्नेन जिते तस्मिन् जितेंद्रिय ॥
“ एवं करणसामर्थ्यात्संयम्यात्मानमात्मना । नयापनयविद्राजा कुर्वीत हितमात्मन. ॥
“ एकस्यैव हि योऽशक्तो मनस सन्निबर्हणे । महीं सागरपर्यंतां स कथ ह्यवजेष्यति ॥
“ क्रियावसानविरसैर्विषयैरपहारिभिः । गच्छत्याक्षिप्तहृदय. करीव नृपतिर्ग्रह ॥
“ शब्दः स्पर्शश्च रूप च रसो गधश्च पचम । एकैकमलमेतेषा विनाशप्रतिपत्तये ॥ ”
पंचानां निदर्शनमाह ( १।४१–४७ )
“ शुचिदर्भाङ्कुराहारो विदूरभ्रमणक्षम । लुब्धकाद्गीतलोभेन मृगो मृगयते वधम् ॥
“ गिरींद्रशिखराकारो लीलयोन्मूलितद्रुम । करिणीस्पर्शसमोहादालान याति वारण ॥
“ स्निग्धदीपशिखालोके विलोकितविलोचन । मृत्युमृच्छति संमोहात्पतग सहसा पतन् ॥
“ दूरेऽपि हि भवन्दृष्टेरगाधसलिले वसन् । मीनस्तु सामिषं लोहमास्वादयति मृत्यवे ॥
“ द्विरेफो गधलोभेन कमले याति बधन । एकैकशो विनिघ्नति विषया विषसंनिभा. ॥
“ क्षयी तु स कथ नस्यायुगपत्य च सेवते ॥
“ सेवेत विषयान्काले मुक्त्वा तत्परता वशी । सुख हि फलमर्थस्य तन्निरोधे वृथा श्रिय ॥
“ धर्मादर्थोऽर्थत काम, कामात्सुखफलोदय । आत्मान हति तौ हत्वा युक्त्या यो न निषेवते ॥४९।
“ सकामासक्तमनसा कातामुखविलोकने । गलति गलिताश्रूणा यौवनेन सह श्रिय ॥
“ नामापि श्रोति सल्हादि विकरोत्येव मानस । कि पुनर्दर्शन तस्या विलासोल्लसितभ्रुव ॥
“ रह प्रचारकुशला मृदुगद्गदभाषिणी । क न नारी रमयाति रक्त रक्तातलोचना ॥ ५१ ॥
“ मुनेरपि मनोऽवश्य सराग कुरुतेऽङ्गना । ” ॥ ५२ ॥ तत्र कानिचिन्निदाति ( १।५४–५८ )
“ मृगयाक्षास्तथा पान गर्हितानि महीभुजा । दृष्टास्तेभ्यस्तु विपद पाण्डुनैषधवृष्णिषु ॥
“ कामः क्रोधस्तथा मोहो लोभो मानो मदस्तथा । षड्वर्गमुत्सृजेदेनमस्मिन् त्यक्ते सुखी नृप ॥
“ दण्डक्यो नृपति कामात्क्रोधाच्च जनमेजय । लोभादैलस्तु राजर्षिर्वातापी र्मांहतोऽसुर ॥
“ पौलस्त्यो राक्षसो मानान्मदाद्दम्भोद्भवो नृप । प्रयाता निधन ह्येते शत्रुषड्वर्गमाश्रिता ॥
“ शत्रुषड्वर्गमुत्सृज्य जामदग्न्यो जितेंद्रिय. । अम्बरीषो महाभागो बुभुजाते चिर महीम् ॥
“ वर्धयन्निह धर्मार्थौ सेवितौ सद्भिरादरात् । निगृहीतेंद्रियग्राम कुर्वीत गुरुसेवनम् ॥
“ शास्त्राय गुरुसंयोग शास्त्र विनयवृत्तये । विद्याविनीतो नृपतिर्न कृच्छ्रेष्ववसीदति ॥ ५९ ॥
“ वृद्धोपसेवी नृपति सता भवति संमत. ।

---

१ शस्यांकुराहारो इति मुद्रितकामन्दकीयपाठ । २ चरन् इति मुद्रितपाठ । ३ गन्धलुब्धो मधुकरो दानासवपिपासया इति मुद्रितपाठ । ४ क्षेमी तु स्यात्कथ वा सम पञ्च सेवते ( मु पाठ ) । ५ निकाम ( मु. पाठ ) । ६ दर्शतो मु पा । ७ वृद्धसे–मु–पाठ ।

“ प्रेर्यमाणोऽप्यसद्वृत्तैर्नाकार्येषु प्रवर्तते । आत्मवान् प्रतिदिनं वेत्ता सम्यक् महीपतिः ।
“ जितेंद्रियस्य नृपतेर्नीतिशास्त्रानुसारिणः । भवंत्युज्वलिता लक्ष्म्यः कीर्तयश्च नमस्पृश ॥ ” तथा
“ इयं हि लोके व्यतिरेकवार्तिनी स्वभावत पार्थिवता समुद्धता ॥
“ बलात्त्वेन विनये नियोजयेन्नयस्य सिद्धौ विनयः पुरस्सर ॥ ६४ ॥
“ गुरुस्तु विद्याधिगमाय सेव्यते श्रुता च विद्या मतये महात्मनां ॥
“ श्रुतानि पुण्यानि मतानि वेधसामसंशय साधु भवंति भूतये ” ॥ ६६ ॥
वेधसा पूर्वपुरुषाणा । विद्यानिरूपण नीतिसारे ( २।२–७ )
“ आन्वीक्षिकी त्रयी वार्त्ता दंडनीतिश्च शाश्वती । विद्याश्चतस्र एवैता इति नो गुरुदर्शन ॥
“ आन्वीक्षिक्यात्मविज्ञान धर्माधर्मौ त्रयीस्थितौ । अर्थानर्थौ तु वार्त्तायां दंडनीतौ नयानयौ ॥ ”
आन्वीक्षिक्या तर्कशास्त्रवेदांताद्यतर्भावः । त्रय्यां मीमांसास्मृत्यादे । तथा ( २।१०–१६ )
“ वर्णाः सर्वाश्रमाश्चैव विद्यास्वासु प्रतिष्ठिता । ईक्षणाद्रक्षणाच्चासा तद्धर्मस्याशभाक् नृप ॥
“ आन्वीक्षिक्यात्मविद्या स्यादीक्षणात्सुखदु खयोः । ईक्षमाणस्तया तत्व हर्षशोकौ व्युदस्यति ॥
“ ऋग्यजु.सामनामानस्त्रयो वेदास्त्रयी मता । उभौ लोकमवाप्नोति त्रय्या तिष्ठन् यथाविधि ॥
“ अंगानि वेदाश्चत्वारो मीमांसान्यायविस्तरः । धर्मशास्त्र पुराण च त्रयीद सर्वमुच्यते ॥
“ पाशुपाल्यं कृषि. पण्य वार्ता वार्त्तानुजीव्यपि । संपन्नो वार्त्तया साधुर्न वृत्तेर्भयमृच्छति ॥
“ दमो दंड इति ख्यातस्तस्माद्दंडोमहीपतिः । तस्य नीतिर्दंडनीतिर्नयनान्नीतिरुच्यते ॥ ॥
“ तयात्मान च शेषाश्च विद्या पायान्महीपतिः । विद्या लोकोपकारिण्यस्तत्पाता हि महीपतिः ॥३२॥
“ अहिंसा सूनृता वाणी सत्य शौच दया क्षमा । वर्णिना लिंगिना चैव सामान्यो धर्म उच्यते॥३३॥
“ स्वर्गानत्याय धर्मोऽय सर्वेषा सर्वलिंगिनां ॥ ” तथा ( २।३४–३५ )
“ सर्वस्यास्य यथान्याय भूपति सम्प्रवर्त्तक । तस्याभावे धर्मनाशस्तदभावे जगच्च्युति ॥
“ वर्णाश्रमाचारयुक्तो वर्णाश्रमविभागवित् । पाता वर्णाश्रमाणा च पार्थिव सर्वलोकभाक् ॥ ”
तथा ( ३।६–९ )
“ आनृशस्य परो धर्म सर्वप्राणभृता यतः । तस्माद्राजाऽनृशस्येन पालयेत्कृपण जनम् ॥
“ न हि स्वसुखमन्विच्छन् पीडयेत्कृपण नृपः । कृपण पीड्यमानो हि मन्युना हति पार्थिवम् ॥
“ को हि नाम कुले जात सुखलेशैर्प्रलोभित । अल्पसाराणि भूतानि पीडयेदविचारयन् ॥
“ आधिव्याधिपरीताय अद्य श्वो वा विनाशिने । को हि नाम शरीराय धर्मापेत समाचरेत् ॥ ”
तथा ( ३।१३ १६ )
“ स्वजनै सर्ज्जन कुर्याद्धर्माय च सुखाय च । सेव्यमानस्तु स्वजनैर्महानति विराजते ॥
“ हिमांशुमाली न तथा न चोत्फुल्लोत्पलं सरः । आनदयति चेतासि यथा सज्जनवेष्टित ॥
“ ग्रीष्मसूर्यांशुसतप्तमुद्वेजनमनाश्रय । मरुस्थलमिवोदग्र त्यजेद्दुर्जनसंगत ॥

---

१ यभनकअवट–काला । २ समुद्धता मु पाठ । ३ भूतानुबन्धीनि–मु–पाठ । ४ योगक्षेमाय देहिना–मु–पाठ , लोकसंस्थितिहेतव इत्यपि पाठान्तरं, ५ विद्या स्वासु इति पुस्तकेपाठ । ६ वर्णिलिंगिना इति मु पाठ । ७ सुखलेशेन लोभित मु पाठ । ८ सङ्गत इति मुपाठ ।

" निश्वासोद्गीर्णहुतभुक्धूमधूम्रीकृताननैः । वरमाशीविषैः सगं कुर्यान्न त्वेव दुर्जनैः ॥
" क्रियतेऽभ्यर्हणीयाय स्वजनाय यथाञ्जलिः । ततः साधु नरः कार्योद्दर्जनाय हितार्थिना ॥ २१ ॥
" नित्यं मनोपहारिण्या वाचा प्रल्हादयेज्जगत् । उद्वेजयति भूतानि क्रूरवाक्धनदोऽपि सन् ॥ ( २३ )
" हृदि विद्ध इवात्यर्थं यथा संतप्यते जनः । पीडितोऽपि हि मेधावी न तां वाचमुदीरयेत् ॥ ( २४ )
" प्रियमेवाभिधातव्यं नित्यं सत्सु द्विषत्सु वा । शिखीव केकां मधुरां वाचं ब्रूते जनप्रियः ॥ ( २६ )
" मदरक्तस्य हंसस्य कोकिलस्य शिखण्डिनः । हरन्ति न तथा वाचो यथा साधु विपश्चिताम् ॥ ( २८ )
" ये प्रियाणि प्रभाषन्ते प्रियमिच्छन्ति तत्कृतम् । श्रीमन्तो वन्द्यचरिता देवास्ते नरविग्रहाः ॥ " ( ३० )

तथा ( ३।३१-३२ )

" शुचिरास्तिक्यपूतात्मा पूजयेद्देवताः सदा । देवतावद्गुरुजनमात्मवच्च सुहृज्जनम् ॥
" प्रणिपातेन हि गुरून् सतोऽनूचानचेष्टितैः । कुर्वीताभिर्मतान् भूत्यै देवान् सुकृतकर्मणा ॥ "

अनूचानः श्रोत्रियस्तस्य चेष्टितानि सत् क्रिया इत्यर्थः ॥

" सद्भावेन हरेन् मित्रं सद्भावेन च बान्धवान् । स्त्रीभृत्यान् प्रेममानाभ्यां दाक्षिण्येनेतरं जनम् ॥ ( ३३ )
" प्राणैरप्युपकारित्वं मित्रायाव्यभिचारिणे । गृहागते परिष्वङ्गं शक्त्या दानं सहिष्णुता ॥ ३५ ॥
" स्वसमृद्धिष्वनुत्सेकः परवृद्धिष्वमत्सरः ॥
" ब्रवुभिर्बन्धुसंयोगः स्वजने चतुरस्रता । तच्चित्तानुविधायित्वमिति वृत्तं महात्मनां ॥ ३६ ॥
" अनेन गच्छन्नियतं महात्मनामिमं च लोकं च परं च विन्दतीति " ॥ ३७ ॥

अन्यानपि गुणानाह याज्ञवल्क्यः ( आ. ३०९-११ )

" महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः । विनीतः सत्वसंपन्नः कुलीनः सत्यवाक् शुचिः ॥
" अदीर्घसूत्रः स्मृतिमान् अक्षुद्रोऽपरुषस्तथा । धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ॥
" स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च । विनीतस्त्वर्थवार्त्तायां त्रय्यां चैव नराधिपः ॥ "

स्थूललक्षः स्थूलं महत् लक्षमुद्देश्यमस्यासौ । कुलीनः कन्यादानग्रहणयोः सत्कुलसंबधेन कुलमर्यादा-रक्षणपरः । अदीर्घसूत्रः कार्येषु त्वरावान् । स्मृतिमानविस्मरणशीलः । अक्षुद्रोऽदोषद्वेषी । अपरुषः परदोषाकीर्त्तनः । अव्यसनः व्यसनहीनः । व्यसनानि चाष्टादशाह मनुः (१अ ७।४७–४८)

" मृगयाक्षा दिवा स्वापः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥
" पैशुन्यं साहसं द्रोह ईर्ष्यासूयाऽर्थदूषणम् । वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥ "

तत्र सप्त कष्टतमान्याह मनुः ( ७।५०–५२ )

" पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥
" दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥
" सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः । पूर्वं पूर्वं गुरुतरं विद्याद्व्यसनमात्मनः ॥ "

परिवादः परनिन्दा । वृथाट्या वृथाटनं । पैशुन्यमज्ञातपरदोषज्ञापनं । साहसं साधोर्बन्धनादिनिग्रहः ।

---

१ मानेपद्मशिखा मु. पाठ । २ केकामधुरं प्रियवाक्स्वनं प्रिय इति मु पाठ । ३ प्रयच्छन्ति च सत्कृतिं श्रीमन्तोऽनिन्द्यचरिता इति मु. पाठ । ४ मुख्यान् इति मु. पाठ । ५ स्वभावेन इ. पाठ । ६ दानाभ्यां मु. पाठ । ७ स्वरन्ध्रगुप्तस्य धनअ—दोषानकीर्त्तन, अपरुषः—अपर दोषाकीर्त्तन ।

द्रोहश्छद्मवध । ईर्ष्या परगुणासहिष्णुता । परगुणेषु दोषाविष्करणमसूया । अर्थदूषणमर्थापहारो देयानामदानं च । वाक्पारुष्यं आक्रोशादि । मद्ये दोषाधिक्यमाह वराहमिहिर·

" पत्नीयत्यपि मातर मदवशात्पत्नीं च मात्रीयति । श्वभ्रीयत्यपि मदिरं दृढशिलं कूप च गेहीयति ॥
" स्वल्प वार्युदधीयतीश्वरमया मोहात्स्थलीयत्यपि।मित्रीयत्यपि विद्विष किमपर कुर्यान्न यन्मद्यपः"॥

**नीतिसारे** ( १४।५९ )

" वमन निर्गुणत्व च सज्ञानाशो विवस्त्रता । असबद्धप्रलापित्वमकस्माद्व्यसन मुहु ॥
" सेद्भिर्वियोगोऽसद्भिश्च सयोगोऽनर्थसगम. । स्खलन वेपथुस्तन्द्रा चिंतातस्त्रीनिषेवण " ॥

सकल्पेनैव स्त्रीसग ' इत्यादि पानव्यसनमत्यत सद्भिर्गर्हित ' । तथा

" श्रुतशीलबलोपेता पानदोषेण भूयसा । क्षयमक्षीणनामानो जग्मुरन्धकवृष्णाय ॥ ६२ ॥"

एव पाने वर्जितेऽपवादो **योगयात्रायां**

" अभ्यासनोत्सवभिषग्वचनोपदेशैः काम पिबेदमतिलोपकृदप्रकाश । "

तदेकनाश्यरोगादौ तद्वचनैरित्यर्थ । द्यूते दोषानाह **कामंदक** ( अ १४।४४–५० )

" लोभो धर्मक्रियालोप कर्मणामप्रवर्त्तन । सत्समागमविच्छित्तिरसद्भि सह वर्त्तन ॥
" स्वल्पेऽप्यर्थे निराशित्वमसत्यपि च साशता ॥
" प्रतिक्षण क्रोधहर्षौ विषादश्च प्रतिक्षण । प्रतिक्षिण च सश्लेष साक्षिप्रश्न प्रतिक्षण ॥
" अन्यांवाचोंगदौर्बल्य शास्त्रार्थाप्रत्यवेक्षण । गूहन मूत्रशकृतोः क्षुत्पिपासोपपीडन ॥
" इत्यादीन् शास्त्रनिपुणा द्यूते दोषान् प्रचक्षते ॥
" पाडवो धर्मराजस्तु लोकपाल इवापरः । द्यूतेन क्लिषता विद्वान्कलत्राण्यथापहारितः ॥
" नलश्च राजा द्यूतेन हृते राज्यमहोदये । धर्मदारान्वने त्यक्त्वा परकर्माकरोत्प्रभु ॥
" द्यूतादनर्थसरभो द्यूतात्स्नेहक्षयो महान् । पक्षाणां संहताना च द्यूताद्भेद प्रवर्त्तत "॥ ५२॥ इति॥

मृगयादोषा उक्ता **नीतिसारे** ( अ.१४।१।८।२० )

" यानक्षोभो यानपातो यानाभिहरण तथा । क्षुत्पिपासाश्रमायासशीतवातोष्णपीडन ॥
" आभियानस्य सपत्या यानव्यसनज महत् । दु स प्रततसिकताकुशकटकभूमय ॥
" ऋक्षाजगरमातगसिहव्याघ्रभयानि च । इत्यादिपृथिवींद्राणा मृगयाव्यसन महदिति॥"(२३-२४)

अन्येष्वपि व्यसनषु लोकतो यथायथ दोषा ऊह्या· । विस्तरभयात्तु न ते सर्वे प्रपञ्चिता ॥

गुणेषु केषाचिद्व्यवस्थामाह मनु ( अ. ७।३२ )

" स्वराष्ट्रे न्यायवृत्त स्याद्भृश चडश्च शत्रुषु । सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वित " ॥

**याज्ञवल्क्य.** ( आचारे ३३४ ) " स्याद्राजा भृत्यवर्गे च प्रजासु च यथा पिता ॥ "

अन्येऽपि गुणा उक्ता **योगयात्राया**

"मेधावी मतिमान्प्रगल्भवचनो दक्ष क्षमावानृजुर्धर्मात्माऽप्यनसूयको लघुकर षाड्गुण्यविच्छक्तिमान्।
" उत्साही पररध्रवित् कृतधृतिर्वृद्धिक्षयस्थानविच्छूरो न व्यसनी स्मरत्युपकृत वृद्धोपसेवी च य"॥

---

'१ गमन विह्वलत्वच इति मु पाठ । ( गमन यथा तथा सचरण । विह्वलत्व अनायत्त शरीर । इति टीकाया )। २ अ १४।६० । ३ अ १४।६१ ४ सत्यप्यर्थे इति मु-पाठ । ५ रागिता इति मु पाठ. । ६ अव्यायामोंऽगदौर्बल्य–यानघतो इति मु पाठ । ७ कथनच—ण्य प्यपि इति मु पाठ । ८ ह्ल–ता ९ ईरअनटचयघ—थ

तथा
" परीक्ष्यकारी न विकत्थनश्च दृढप्रतिज्ञोऽतिदृढप्रहारी ।
" जितेन्द्रिय स्याज्जितकोपलोभनिद्रालस स्यादपरिग्रहश्च ॥
" त्यागी विनीत प्रियदर्शनश्च व्यपेतमोह. प्रतिपत्तियुक्त. ।
" देशस्य कालस्य च भागवेत्ता स्वय च य स्याद्व्यवहारदर्शी ॥
" शब्दार्थविज्ञानपटु प्रगल्भ. सङ्ग्रामविद्याकुशलोऽभिजात ।
" मिताभिभाषी मितसत्यवक्ता दैवान्वितो यश्च स धाम लक्ष्म्या ॥"
त्यागीत्युक्त । तत्र पात्रे दातव्यमपात्रे दातुरनिष्टमुक्त मिहिरेण
" गुणै: समस्तैरपि सम्प्रयुक्ता कन्येव पित्रा विगुणाय दत्ता ।
" करोत्यकीर्तिं सुखवित्तहानि शास्त्रेतरज्ञानजडाय दात ॥ "
अपात्रेऽपि कचिद्दानमुक्त भारते
" यो ज्ञातिमनुगृह्णाति दरिद्र दीनमातुर । सपुत्रपशु वृद्धिं च श्रेयश्चानन्त्यमश्नुते ॥
" ज्ञातयो वर्द्धनीयास्तैर्य इच्छन्त्यात्मन शुभ । विगुणाश्चापि सरक्ष्या ज्ञातयो भरतर्षभ ॥
" किपुनर्गुणवन्तस्ते त्वत्प्रसादाभिकाङ्क्षिण । ज्ञातिभिर्विग्रहस्तात न कर्तव्यो भवार्थिनेति ॥ "
तस्य कृत्यमुक्त मिहिरेण "विचिन्त्य कार्याणि निशावसाने द्विषत्सुहृन्मण्डलसश्रितानां ।
" बलार्थदेशेषु नियोजितानां समाश्रितानां च कृताकृतानि ॥ "
तथा " सवेणुवीणापटहस्वनेन गीतेन पूर्व व्यपनीतनिद्र ।
" शय्या त्यजेत्तूर्यरवावसाने शृण्वन् गिरो मङ्गलपाठकाना ॥ " तदुत्तरमाचारमयूखोक्तप्रकारेण
शौचदन्तधावने कुर्यात् । तत्र दन्तधावनत्यागे परीक्षोक्ता योगयात्रायां
" अभिमुखपतित प्रशान्तदिक्स्थ शुभमतिशोभनमूर्ध्वसस्थित च ।
" अशुभकरमतोऽन्यथाप्रदिष्ट स्थितपतित च करोति मिष्टमन्न ॥ "
श्मश्रुकर्मणि विशेष
" राज्ञ कार्य पञ्चमे पञ्चमेऽन्हि क्षौरर्क्षे वा श्मश्रु तस्योदये वा ॥
' त्यक्त्वा तारा सप्त पञ्चत्रिपूर्वा यात्राकाले नैव कार्य न युद्धे ॥"
ततश्च पञ्चाङ्गादिश्रवणमुक्तम् । " श्रुत्वा तिथिं भग्रहवासर च प्राप्नोति धर्मार्थयशांसि सौख्य ।
" आरोग्यमायुर्विजय शुभ च दु स्वप्ननाश च तथा विदध्यात् ॥"
आयुर्जनक विजयार्थ दुःस्वप्ननाशक च कर्म कुर्यादित्यर्थ ।
दु स्वप्नाश्चाचारमयूख उक्ता । तच्छान्तयः शान्तिमयूखे वक्ष्यत । तत कृत्य
" प्रणम्य देवांश्च गुरूंश्च पूर्वं दत्वा च गा वत्सयुता द्विजाय ।
" दृष्ट्वा मुख सर्पिषि दर्पणे च सर्पिश्च दद्यात्सहिरण्यमेव ॥"
ततश्च पर्वादौ भूदान निबन्धादिदान च कुर्यादित्याह याज्ञवल्क्य (आचारे ३१८)
" दत्वा भूमिं निबन्ध वा कृत्वा लेख्य च कारयेत् । आगामिभद्रनृपतिपरिज्ञानाय पार्थिव: ॥"
निबन्धो वृत्तिः । भद्रो धार्मिक । लेख्यप्रकारमपि स एवाह ( आचारे ३१९।२० )

" पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिन्हितं । अभिलेख्यात्मनो वंश्यान् आत्मानं च महीपतिः ॥
" प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनं । स्वहस्तकालसंपन्नं शासनं कारयेत्स्थिरम् ॥ "

प्रतिगृह्यत इति प्रतिग्रहो भूमिनिबन्धादि । तस्य परिमाणं । दानं दीयमानक्षेत्रादि तस्य छेदो मर्यादा । स्वहस्तेन स्वहस्तलिखितेन । कालेन च शकवर्षमासपक्षदिनरूपेण कारयेत्संधिविग्रहादिकारिणा

"संधिविग्रहकारी तु भवेद्यस्तस्य लेखकः । स्वयं राज्ञा समादिष्टः स लिखेद्राजशासनमिति" स्मरणं तु ।

तथा

" प्रेषयेच्च तथा चारान्स्वेष्वन्येषु च सादरं । ऋत्विक्पुरोहिताचार्यैराशीर्भिरभिनन्दितः ॥
" दृष्ट्वा ज्योतिर्विदो वैद्यान् दद्याद्गां काञ्चनं महीं । नैवेशिकानि च तथा श्रोत्रियाणां गृहाणि च ॥ "

नैवेशिकानि विवाहोपयोगीनि । ततश्च सभां प्रविशेदित्युक्तं मिहिरेण

" स्मितप्रसन्नप्रथमाभिभाषितैः प्रसाददृष्ट्या करसंग्रहैश्च ।
" यथानुकूलं हृदयान्यपि द्विषां प्रसादयन् धर्मसभां समाश्रयेत् ॥

सभाप्रवेशनानन्तरमाह **मनुः** ( अ ७।१४७ )

' तत्र स्थितः प्रजाः सर्वाः प्रतिनन्द्य विसर्जयेत् । विसृज्य च प्रजाः सर्वा मन्त्रयेत्सह मन्त्रिभिः ॥"

तत्र च दण्ड्यान् दण्डयेदित्याह **वराहमिहिरः**

" क्षमान्वितोऽस्मीति विचिन्त्य नैव दण्ड्येषु दण्डक्षमणं नरेन्द्रैः ।
" दण्डप्रमादो हि स दुर्जनस्य हन्तेन यो जीवति जीववर्गः ॥
" सुतरामभिवर्द्धतेऽभिमानो नीचानां क्षमयान्विते नृपे च ।
" अत उग्रतरेण ते निवर्त्या येनान्येऽपि खलास्तथा न भूयः ॥
" यस्मिन् गृहीते सदृशापराधो महाजनस्त्रासमुपैति तस्मिन् ।
" दण्डो निपात्यो मनुजेश्वरेण कालान्तरेऽन्यद्दुष्यपाटितस्य कार्यं ॥" दण्डाकरणे चानिष्टं । यथोक्तं
' द्विरद इव मदेन विप्रयुक्तो विषरहितो भुजगो व्यसिश्च काशः ।
" परिभवमुपयाति नापराधे यदि मनुजाधिपतिः करोति दण्डं ॥ '

दण्डश्च योग्य एव कार्य इत्युक्तं **योगयात्रायां**

" एकस्य तुल्योदरपाणिपाददण्डाय भीताः प्रणमन्ति मर्त्याः ।
" अत्युग्रदण्डादपि चोद्विजन्ते दण्डोपराधप्रतिमः शिवाय ॥"

केषांचिच्च पञ्चयज्ञवदावश्यकत्वमुक्तं **मिहिरेण**

" दुष्टस्य दण्डः सुजनस्य पूजा न्यायेन कोशस्य च संप्रवृद्धिः ।
" अपक्षपातोऽर्थिषु राष्ट्ररक्षा पञ्चैव यज्ञाः कथिता नृपाणां ।" **मनुः** ( अ ७।१५३-१५५ )
" कन्यानां संप्रदानं च कुमाराणां च रक्षणं । दूतसंप्रेषणं चैव कार्यशेषं तथैव च ॥
" अन्तःपुरप्रचारं च प्रणिधीनां च चेष्टितं । कृत्स्नं चाष्टविधं कर्म पञ्चवर्गं च तत्वतः ॥
" अनुरागापरागौ च प्रचारं मण्डलस्य च ॥ " अष्टविधं कर्म **प्रचेता आह**
" आदाने च विसर्गे च तथा प्रैषनिषेधयोः । पञ्चमे चानुवचने व्यवहारस्य चेक्षणे ॥

---

१ क्ष-प्रीतिग्रह ।

“ दण्डशुद्धयोः समायुक्तस्तेनाष्टगतिको नृपः ” ॥ शुद्धि[1] प्रायश्चित्त । पञ्चवर्ग
“ सहायाः साधनोपाया विभागो देशकालयोः । विनिपातप्रतीकार सिद्धि पञ्चागमिष्यते ॥ ”
“ मनु ( ७।२१९ )
“ उपेतारमुपाय च सर्वोपायाश्च कृत्स्नश । एतत्त्रयं समाश्रित्य प्रयतेतात्मसिद्धये ॥ ”
ततश्च भोजनमुक्त योगयात्रायां
“ श्रातश्च तस्मिन्विनियुज्य साधून् सधामविद्यादिविभक्तकालः ।
“ सर्वाणि कार्याणि यथाक्रमेण कृत्वा गृह भोक्तुमथो विशेत्स ” । मनुरपि ( अ ७।२२०।२२ )
“ एव सर्वमिदं राजा सह समन्त्य मंत्रिभि । व्यायम्याप्लुत्य मध्यान्हे भोक्तुमत पुर व्रजेत् ॥
“ विषघ्नैरगदैश्चास्य सर्वद्रव्याणि योजयेत् । विषघ्नानि च रत्नानि नियतो धारयेत्सदा ॥ ”
भोजनमाह स एव ( ७।२२१ )
“ तत्रात्मभूतै. कालज्ञै रक्षार्थी परिचारकैः । सुपरीक्षितमन्नाद्य अद्यान्मत्रैर्विषापहै ॥ ”
कामन्दकोऽपि ( ७।९–१० )
“ याने शय्यासने पाने भोज्ये वस्त्रे विभूषणे । सर्वत्रैवाप्रमत्त स्याद्बुध्येत विषदूषितं ।
“ विषघ्नैरुदके स्नातो विषघ्नमणिभूषित । परीक्षित समश्नीयाज्जाङ्गलीविद्भिषग्वृत ॥ ”
जाङ्गली आरण्यवृश्चिकादि । विष । तद्वित् तत्परिहारविदित्यर्थ । तत्र भोजनसमये विषदिग्धान्न-परीक्षार्थं पक्षिण स्थाप्याः । तेषा च चेष्टया विष ज्ञेय । यथोक्त नीतिसारे ( ७।११–१३ )
“ भृङ्गराज शुकश्चैव सारिका चेति पक्षिण । क्रोशति भृशमुद्विग्ना विषपन्नगदर्शनात् ॥
“ चकोरस्य विरज्येते नयने विषदर्शनात् । ” विरज्येते निर्मीलिते भवत ।
“ व्यक्त च माद्यति क्रौंचो म्रियते मत्तकोकिल[2] । जीव[3] जीवस्य च ग्लानिर्जायते विषदर्शनात् ।”
ग्लानी रोगावृतता ।
“ एषामन्यतमेनापि समश्नीयात्परीक्षित ” । परीक्षामाह कामन्दक ( ७।१५–१६ )
“ भोज्यमन्न परीक्षार्थं प्रदद्यात्पूर्वमग्नये । वयोभ्यश्च ततो दद्यात्तत्र लिङ्गानि लक्षयेत् ॥ ”
अग्निमध्ये क्षिपेदित्यर्थ. ।
“ धूमार्चिर्नीलता वन्हे शब्दस्फोटश्च जायत । अन्नेन विषदग्धेन वयसा मरण भवेत् ” ॥
द्रव्यविशेषेण परीक्षामाह स एव ( ७।२० )
‘ रसस्य नीला पयसश्च ताम्रा मद्यस्य तोयस्य च कोकिलाभा ।
“ श्यामा च दध्नो विषदूषितस्य वन्हौ भवत्यूर्ध्वगता च लेखा ॥ ”
विषदिग्धवस्त्रपरीक्षोक्ता नीतिसारे ( ७।२३ )
“ प्रावाराभरणाना च श्याममण्डलकर्णिता । तन्तूलीपक्ष्मणा लोम्नां स्याद्भ्रशश्च विषाश्रयात् ॥ ”
ऊर्णावस्त्राणा लोम्ना भ्रश स्यादित्यर्थ. । विषदायिना च पुरुषाणा लक्षणमुक्तं नारदेन
“ मुखस्य श्यामवर्णत्वं स्वरभेदो जृंभण मुहु । स्खलनं वेपथु स्वेद आवेशो दिग्विलोकनम् ॥

---

१ व्यायम्योति मुद्रित मनु पाठ । २ आंगुलावीद् मुद्रित मु पाठ । ३ शुव्यक्त—मु पाठ । ४ कोकिल-किल मु पाठ । ५ निर्त्यं मु पाठ । ६ सरन्ध्रा मु. पाठ । ७ तन्तूनां इति पाठ ।

" स्वकर्मणि स्वभूमौ स्यादनवस्थानमेव च । लिंगान्येतानि निपुण लक्षयेद्विषदायिनामिति " ॥
गृहे सर्पाद्युपद्रवनिरासार्थमुपायमाह कामन्दक' ( ७।१४ )
" मयूरपृषतोत्सर्गे न भवति भुजगमा. । तस्मान्मयूरपृषतान् भवने नित्यमुत्सृजेत् ।
" शयनस्य गृहे तद्वन्नकुलं स्थापयेन्नृप " इति ॥ इति विषपरीक्षा ।
पूर्वं परीक्षितमन्नमनेकाविध भक्ष्यभोज्यादिकमाचारमयूखोक्तरीत्या भुञ्जीत
तत्र च मक्षिकानिवारणार्थं व्यजनार्थं च स्त्रीभिः स्पर्शमनुजानाति मनु ( अ ७।२२३–२४ )
" परीक्षिताः स्त्रियश्चैन व्यजनोदकधूपनै. । वेषाभरणसयुक्ताः संस्पृशेयु समाहिताः ॥
" एवं प्रयत्नं कुर्वीत पानशय्यासनाशने । स्नाने प्रसाधने चैव सर्वालंकारकेषु च ॥ "
इति भोजनम । मनु ( अ. ७।२२५–२२६ )
" भुक्तवान्विहरेच्चैव स्त्रीभिरत पुरे सह । विहृत्य च यथाकाम पुन कार्याणि चिंतयेत् ॥
" अलङ्कृतश्च सपश्येदायुधीय पुथग्जन । वाहनानि च सर्वाणि वस्त्राण्याभरणानि च ॥ "
ततः पुनः प्रसाधनादि कार्यं ( कामन्दकीये ७।२८–२९ )
" प्रसाधनादि यत्किंचित्तत्सर्वं परिचारका । उपानिन्युर्नरेन्द्राय सुपरीक्षितमुद्रित ॥
" परस्मादागतं तच्च तच्च सर्वं परीक्षयेत् । सदा स्वेभ्य. परेभ्यश्च रक्षेद्राजा सुरक्षित " ॥
अनतरं च मृगयाद्यर्थं यानाद्यारोहेदिति कामन्दक. ( ७।३० )
" यान वाहनमारोहेत् ज्ञात यात्रोपपादित । अविज्ञातेन न तथा सकटेन न सव्रजेत् ॥ "
ज्ञातमन्यै. परीक्षित । यात्रोपपादित तत्तद्यात्राया योग्य । यथा व्याघ्रादिमृगयाया हस्त्यादि ।
तदा च खड्गावपि बिभृयात् । तत्र खड्गलक्षण योगयात्रायां
" अंगुलशतार्द्धमुत्तम ऊन स्यात्पंचविंशति खड्गः ।
" अंगुलमानात् ज्ञेय समांगुलस्थो व्रण शुभद " । केचनव्रणा शुभदा इत्युक्त
" श्रीवृक्षवर्द्धमानातपत्रशिवलिंगकुडलाब्जानां । एते व्रणा प्रशस्ताऽस्त्रायुधस्वस्तिकाना च " ॥
व्रणानामशुभत्वं तत्रैव
"कृकलासकाककर्कक्रव्यादकबधवृश्चिकाकृतय । खड्गे व्रणा न शुभदा वंशानुगता प्रभूताश्चेति "॥
तदाकारस्तत्रैव
" गोजिव्हासंस्थानो नीलोत्पलवंशसदृशश्च । करवीरपत्रसदृशश्चडकरो मडलाग्र प्रशस्तश्च ॥"
मंडलाग्रः खड्गः । तथा
" नाकारण न विवृणुयात् न विघट्टयेच्च । पश्येन्न तत्र वदन न वदेच्च मूल्यम् ॥
" देश न चास्य कथयेत्प्रतिमानयेच्च । नैव स्पृशेन्नृपतिरप्रयतोसि यष्टिं ॥ "
प्रतिमानयेत्पूजयेत् । अप्रयतो शुचि । खड्गादिसंस्कारमाह वराहमिहिर
" अर्कं पयोहुडविषाणमषीसमेत पारावताखुशकृता च युतप्रलेप ।
" शस्त्रस्य तैलमथितस्य ततोऽस्य पान पश्चाच्छितस्य न शिलासु भवेद्विघात ॥
" क्षारे कदल्यामथितेन युक्ते विनोषिते पायितमायुध यत् ।

---

१ घ—भूपते । २ रयबघअनट–प्रवस्रवे । ३ घअनटयरईब–आयुधन ।
४ शाईधरयथनकट–कश, घ–कसक ।

" सम्यक् स्थितं चाश्मनि नैति भङ्गं न चान्यलोहेष्वपि तस्य कौण्ठ्यम् ॥"
इति खड्गलक्षणम् । अश्वादिलक्षणानि बलनिरूपणे वक्ष्यामः ।
अथ मृगया । सा त्रिविधा । जलस्थलान्तरिक्षभेदात् । सा च यद्यपि पूर्वं व्यसनमध्ये परिगणिता तथापि
" अन्यकार्यविरोधेन कुर्याद्वाखेटकं नृपः " इत्यादिवचनादत्यनासक्तेन कार्या ।
अस्यां च गुणोऽप्युक्तः कालिदासेन ( शाकुन्तले २।५ )
" मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः । सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ॥
"उत्कर्षः स च धन्विनां यदिषवः सिद्ध्यन्ति लक्ष्ये चले । मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥"
कामन्दकोऽपि
" आमाद्यो हि जीर्यते सा योग्यैव विवानिशम् । चरेषु यत्र लक्ष्येषु बाणसिद्धिश्च जायते " इति ॥
तत्र जलमृगयामाह कामन्दकः ( ७।३४ )
" परितापिषु वासरेषु पश्यन् तटलेखास्थितमाप्तसैन्यचक्रम् ।
" सुविशोधितनक्रमीनजालं व्यवगाहेत जले सुहृत्समेतः ॥" तथा ( ७।३२ )
" अधार्मिकाश्च क्रूराश्च दृष्टदोषाश्चिराकृताः । परेभ्योऽभ्यागताश्चैव दूरेणैव समाचरेत् ॥" तथा ( ७।३३ )
" महावातसमुद्भूतामपरीक्षितनाविकाम् । अन्यनौप्रतिबद्धां वा लोपयेन्नावमातुरः ॥ "
लोपयेन्नाङ्गीकुर्यात् इत्यर्थः । तत्र च
" जालैश्च बडिशैश्चैव शक्तिभिः कण्टकैस्तथा । मत्स्यकच्छपराजीवान् हन्याद्विगतसम्भ्रमः ॥ "
इति जलमृगया । स्थलमृगयामाह चाणक्यः
" सुपरिक्षितरक्षितानां तु सीम्नो लघुयानस्तु मृगाटवीमुपेयादिति " । कामन्दकोऽपि ( १४।२८ )
" अथ चेन्मृगयाक्रीडा वाञ्छेत्तन्नगरान्तिके । कारयेन्मृगयारण्यं क्रीडाहेतोर्मनोरमम् ॥
" अकण्टकलतागुल्मं विषपादपवर्जितम् । शोधितग्राहसलिलं सुगम्भीरजलाशयम् ॥
" नानापुष्पसमाकीर्णं हस्तिनीकलभान्वितम् । अगम्यं रिपुसैन्यानां मनःप्रीतिविवर्द्धनम् ॥
" तद्वनेचरान्वित्तज्ञैः क्लेशायाससहैर्दृढैः । मृगयारक्षिभिः स्वाप्तैः प्रक्रीडेद्धीरमानसः ॥ "
वनेचरा मृगादयस्तेषां क्रोधभयाविष्टं चित्तं जानन्ति ते ।
" तत्कर्मी तु नरेन्द्रस्य जनो जितपरिश्रमः । क्रीडनायास्य विविधा मृगजातीः प्रवेशयेत् ॥ ३८ ॥
" यदा च प्रविशेद्राजा क्रीडनार्थं तथा बहिः । सन्नद्धं यत्नतस्तिष्ठेत्सैन्यं दूरातगोचरम् ॥ ४० ॥
" विधिरेव[5] समादिष्टो मृगयाक्रीडने वरः । न गच्छेदन्यथा राजा मृगया मृगयुर्यथा " ॥ ४२ ॥
लुब्धकवदेकाकी न गच्छेदित्यर्थः । एवमनासक्तः श्येनादिक्रूरपक्षिभिरन्तरिक्षमृगयामपि कुर्यात् ।
इति मृगयानिरूपणम् ।
ततो गृहमागत्य सायंकृत्यं कार्यमित्याह मनुः ( अ ७।२२७–२२९ )
" सन्ध्यां चोपास्य शृणुयादन्तर्वेश्मनि शस्त्रभृत् । रहस्याख्यायिनां चैव प्रणिधीनां च चेष्टितम् ।
" गत्वा कक्ष्यान्तरं सम्यक् समनुज्ञाप्य तं जनम् । प्रविशेद्भोजनार्थं तु स्त्रीभिरन्तःपुरं पुनः ॥

---

१ अमत्स्यबकचक्रैरव—बले । २ कामन्दकीये १४।३० । ३ सम्भृतजलदाशय इति मुद्रितपाठः १४।३३ ।
४ नानाविहगसंकुलं इति मुद्रितपाठः ( ३३ ) । ५ तत्कर्मीणो मु० पा० ६ प ।

" तत्र भुक्त्वा पुनः किंचित्तूर्यघोषैः प्रहर्षितः । संविशेच्च यथाकालमिति ॥ "

विविक्ते च मंत्रं कुर्यादित्याह मनु ( अ ७।५८, ६०–६२ )

" सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता । मन्त्रयीत परं मन्त्रं राजा षाड्गुण्यसंयुतम् ॥

" अन्यानपि प्रकुर्वीत शुचीन् प्राज्ञानवस्थितान् । सम्यगर्थसमाहर्तॄन् सामान्यान्सुपरीक्षितान् ॥

" निवर्त्तेतास्य यावद्भिरितिकर्त्तव्यता नृभि । तावतोऽतन्द्रितान् दक्षान् प्रकुर्वीत विचक्षणान् ॥

" तेषां मध्ये नियुञ्जीत शूरान् दक्षान् कुलोद्गतान् । शुचीनाकरकर्मान्ते भीरूनन्तर्निवेशने ॥

आकरा. सुवर्णाद्युत्पत्तिस्थानानि । कर्मान्ते धान्यादिसंग्रहस्थाने । अन्तर्निवेशने शयनादिगृहे भीरून् । शूरा हि तत्रैकान्ते कदाचित् राजानं निहन्युः ।

" अध्यक्षान् विविधान् कुर्यात्तत्र तत्र विपश्चित । ( ७।८१ )" तत्र तत्र हस्त्यश्वादौ ।

" दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदं । इङ्गिताकारचेष्टाज्ञं शुचिं दक्षं कुलोद्गतं ॥

"अनुरक्तः शुचिर्दक्षः स्मृतिमान्देशकालवित् वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते" (७।६३–६४)

पूर्वश्लोकोक्तयोः शुचिदक्षत्वयोरत्र पुनरुक्तिः प्रशंसार्था ।

तत्रैव विविक्ते शस्त्रधरस्थारादीनामशस्त्रधराणां वाक्यानि शृणुयात् । तदुक्तम्

" तत्र शस्त्राणि धार्याणि चाराणां भेदशङ्कयेति " ।

तत्र सर्वदा । राजसमीपवर्त्तिनां सवकानां लक्षणमाह कामन्दक ( ५।२१–३० )

" भर्त्तुरर्द्धासने दृष्टिं मुहुर्नान्यत्र निक्षिपेत ।

" कोऽत्रेत्यहमिति ब्रूयात् सम्यगाज्ञापयेति च । आज्ञां चावितथां कुर्याद्यथाशक्त्यविलम्बितं ॥

" उच्चैः प्रहसनं कासं ष्ठीवनं कुत्सनं तथा । जृम्भणं गात्रभङ्गं च पर्वास्फोटं च वर्जयेत् ॥

" प्रविश्य सानुरागस्य चित्तज्ञस्य च समतः । समर्थयश्च सत्पक्षं साधु भाषेत भाषिते ॥

" तन्नियोगेन वा ब्रूयादर्थं सुपरिनिश्चितं । सुखप्रबन्धगोष्ठीषु विवादे वादिनां मतं ॥

" विजानन्नपि न ब्रूयाद्भर्त्तुः क्षिप्तोत्तरं वचः । प्रवीणोऽपि च मेधावी वर्जयेदभिमानिता ॥

" यद्यप्युच्चैर्विजानीयान्नीचैस्तदपि कीर्त्तयेत् । कर्मणा तस्य वैशिष्ट्यं कथयेद्विनयान्वितः ॥

" आपद्युन्मार्गगमने कार्यकालात्ययेषु च । अपृष्टोऽपि हि नान्वेषी ब्रूयात्कल्याणभाषितम् ॥

" प्रियं तथ्यं च पथ्यं च वदेद्धर्मार्थमेव च । परार्थं देशकालज्ञो देशं कालं च साधयेत " ॥

सतोषावसरे परोपकारमपि कुर्यादित्यर्थ । तथा ( ।५।३ )

" अपि स्थाणुवदासीत शुष्यन् परिगतः क्षुधा । न त्वेवानर्थसंपन्नां वृत्तिमीहेत पंडितः " ॥

तथा

" गुह्यं कर्म च मन्त्रं च न भर्त्तुः संप्रकाशयेत् । विद्वेषं च विनाशं च मनसाऽपि न चिंतयेत् ॥

" स्त्रीभिस्तद्दर्शिभिः पापैर्वैरिभूतैर्निराकृतैः । एकार्थचर्यां साहित्यं संसर्गं च विवर्जयेत् ॥

" वेषभाषानुकरणं न कुर्यात्पृथिवीपतेः । सम्पन्नोऽपि च मेधावी स्पर्द्धेत न च तद्गुणैः ॥

---

१ क्ष—गिरिशिखरे अरण्ये वा । २ **यवअनद**—दत्तान् । ३ तथामर्थे इति मानवीयपाठ । ४ **रक्षकय-अयमटय**—वपुष्मान् । ५ **अनटयबघई**—नान्यत्रविक्षिपेत, भर्तुरन्वासने तिष्ठन् दृष्टिमन्यत्र विक्षिपेदिति मु पाठ, क्ष-मुहूर्त्तान्यत्र । ६ थी मु पाठ । ७ प्रवृद्ध मु पा । ८ स्थाणुरिवासीत । ९ विद्विष्टिं अ ५।३१ । १० दृतै । ११ वेषभाषानुकरण ।

" रागापरागौ जानीयाद्भर्तुः कुशलकर्मवित् । इगिताकारचेष्टाभ्यस्तदभिप्रायवित्तथा ॥
" तदर्थी तत्कृता बोच्चैराकर्णयति तत्कथा । श्लाघते श्लाघनीयेषु श्लाघमान च नन्दति " ॥
राज्ञा कस्यचित्स्तुतौ क्रियमाणायां स्वयमप्यभिनन्दनं कार्यमित्यर्थः ।
" कथान्तराणि स्मरति प्रकृष्टान् कीर्तयेद्गुणान् । निर्गुणं ह्यपि भर्तारं आपत्सु न परित्यजेत् " ॥ ४७ ॥
भारते
" अग्निं दीप्तमिवासीदेत् राजानमुपशिक्षित' । आशीविषमिव क्रुद्धं प्रभुं प्राणधनेश्वरम् ॥
" यत्नेनोपचरेन्नित्यं नाहमस्मीति चिंतयेदिति " ॥
राजा क्षिपतीति मत्वा नावगणनीय । किंतु यथा सर्पे सावधानता तथा प्रभौ कार्येत्यर्थ ।
" तत परतरो नास्ति य आपत्सूपतिष्ठते । स्वस्थवृत्तेषु सत्वाद्या नैवयात्यभिलक्ष्य ते ॥
" विपत्सु धर्मधुर्याणां तेषां नामातिरिच्यते । श्लाघ्यायानन्दनी चैव महतामुपकारिता ॥
" काले कल्याणमाधत्ते स्वल्पापि सुमहोदये । जयाज्ञापय जीवेति नाथ देवेति चादरात् ॥
" रक्षांस्यपि हि गृह्यते नित्य छंदानुवृत्तिभि । धीसत्वोद्योगयुक्ताना किं दुराप महात्मन ॥
" छंदानुवर्तिना लोके क परः प्रियवादिना ॥
" अलसस्याल्पदोषस्य निर्विद्यस्याकृतात्मन । प्रदानकाले भवति मातापि हि पराङ्मुखी ॥
" ये शूरा ये च विद्वांसो ये च सेवाविपश्चित । तेषामेव विकाशिन्यो भोग्या नृपतिसंपदः ॥
" आजीव्य सर्वभूताना राजा पर्जन्यवद्भुवि । अनाजीव्य त्यजन्त्येन शुष्कं वृक्षमिवाण्डजा ॥ "
चाणक्योऽपि
" सुवर्णपुष्पितां पृथ्वीं विचिन्वन्ति त्रयो जनाः । शूरश्च कृतविद्यश्च यश्च जानाति सेवितुं॥"तथा
" कुलं वृत्तं तथा शौर्यं सर्वमेतन्न गण्यते । दुर्वृत्तेऽप्यकुलीनेऽपि जनो दातरि रज्यते ॥
इत्यादिसेवकलक्षणम् ।
अथ स्वामिकृत्यं नीतिसारे ( ५।६४–६६ )
" अपेक्ष्यं हि नृप काल भृत्यानामनुजीविना । कर्मणामानुरूप्येण वृत्तिं समनुकल्पयेत् ॥
" स्थाने काले च पात्रे च न हि वृत्तिं विलोपयेत् । एतद्वृत्तिविलोपेन राजा भवति गर्हित ॥
" अपात्रवर्षणं जातु न कुर्यात्स विगर्हितं । अपात्रवर्षणादन्यत्किं स्यात्कोशक्षयादृते ॥
" कुलं विद्या श्रुतं शौर्यं सौशील्यं भूतपूर्वता । वयोवस्था च संप्रेक्ष्य आद्रियेन महात्मन ॥
" कुलीनान्नावमन्येत सम्यग्वृत्तान्मनस्विन । त्यजन्त्येते च भर्तारं प्रति वा मानहेतुना ॥
" निरालोके हि लोकेऽस्मिन् नासते तत्र पण्डिता । जात्यस्य हि मणेर्यत्र काचेन समता मता ॥७१॥
" कृशोऽपि हि विवेकज्ञो याति संश्रयणीयता ॥ ७० ॥ यथा
" सर्वैर्गुणैर्विहीनोऽपि स राजा य प्रतापवान् । प्रतापयुक्तात्त्रस्यन्ते परे सिंहान्मृगा इवेति ॥"
विरक्तस्वामिलक्षणमुक्तं कामन्दकेन ( ५।४२–४६ )
" अकोपोऽपि सकोपाभ प्रसन्नश्चापि नि फल । वदत्यकस्माद्दुष्टेति रूक्षं च मुहुरीक्षते ॥

---

१ कुल् । इगिताकारलिङ्गाभ्यामिङ्गिताकारतत्त्ववित् ॥ ३४ ॥ इति सुपाठ । २ तामुद्वै ॥ १६ ॥ । ३ श्लाघ्यमान च—( ३७ ) । ४ कथान्तरेषु प्रहृष्टः ( ३७ ) । ५ अहापयन्नाप —सु पाठ । ६ इत्यावटमय-रवक—रूपेण । ७ महात्मवान् । ८ ऽवमन्तार । ९ निष्फल ।

" विज्ञाप्यमानो वृत्त्यर्थं सहसोत्थाय गच्छति । समाचयति दोषेण वृत्तिच्छेदं करोति च ॥
" साधूक्तमपि तद्वाक्यं समर्थयति चान्यथा । आचक्षाणकथाभंगं करोति विरसीभवन् ॥
" उपास्यमानः शयने सुप्तवत्तत्र तिष्ठति । यत्नेन बोध्यमानोऽपि सुप्तवच्च विचेष्टते ॥
" इत्यादि ह्यनुरक्तस्य विरक्तस्य च लक्षणं । रक्तावृत्तिं समीहेत विरक्तं च परित्यजेदिति ॥ "
अत्र षाड्गुण्यसंयुतामिति मन्त्रविशेषणमुक्तं । तानाह मनुः ( ७।१६१ )
" संधिं च विग्रहं चैव यानमासनमेव च । द्वैधीभावं संश्रयं च षाड्गुण्यं चिंतयेत्सदा ॥ "
तत्र कामन्दकः संधिं निरूपयति ( ९।१ )
" बलीयसाऽभियुक्तस्तु नृपोऽनन्यप्रतिक्रियः । आपन्नः संधिमन्विच्छेत्कुर्वाणः कालयापनामिति ॥"
तत्र नीतिसारे । यद्यप्यनेकविधस्तथाप्युपहारसंधिमैत्रीसंध्योरेव प्राधान्यमुक्तं ( ९।२१–२२ )
" एक एवोपहारस्तु संधिरेष मतो हि नः । उपहारस्य भेदास्तु सर्वेऽन्ये मैत्रवर्जिताः ॥
" अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्तते । उपहारादृते यस्मात्संधिरन्यो न विद्यते ॥ '
मैत्रीसंधिस्तु समयोरेव । क्वचिदन्यजयार्थं विषमयोरपि भवति ।
" कन्यादानाद्युपकारसंधयस्तु अनारेयोवातर्भवति । अतो न ते पृथक् निरूपिताः ।
असंधेयानाह कामन्दकः ( ९।२३–२४ )
" बालो वृद्धो दीर्घरोगस्तथा ज्ञातिबहिष्कृतः । भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥
" विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् । दुर्भिक्षव्यसनापेतो बलव्यसनसंकुलः ॥ २५ ॥
" अदेशस्थो बहुरिपुर्युक्तः कालेन यश्च न । एतैः संधिं न कुर्वीत विगृह्णीयात्तु केवलं ॥
" एते विगृह्यमाणा हि क्षिप्रं यान्ति रिपोर्वशं ॥" २६ २७ ॥ तथा ( ९।४५ ४६ )
" संधिः कार्योऽप्यनार्येण संप्राप्योत्सादयेद्धि सः ।
" संघातवान्यथा वेणुर्निबिडैः कण्टकैर्वृतः । न शक्यते समुच्छेत्तुं भ्रातृसंघातवांस्तथा ॥
" बलिना सह योद्धव्यमिति नास्ति निदर्शनं । प्रतिवातं हि न घनः कदाचिदुपसर्पति ॥ ४९ ॥
" बलीयसि प्रणमतां काले विक्रमतामपि । संपदो न विसर्पन्ति प्रतीपमिव निम्नगाः ॥ ५० ॥
' राजा न गच्छेद्विश्वासं संधितोऽपि हि बुद्धिमान् । अद्रोहसमयं कृत्वा वृत्रमिन्द्रः पुराऽवधीदिति "॥५१॥
इति संधिः । अथ विग्रह उक्तो नीतिसारे ( १०२ )
" आत्मनोऽभ्युदयाकाङ्क्षी पीड्यमानः परेण वा । देशकालबलोपेतः प्रारभेतेह विग्रहं ॥ "
तत्र विग्रहकरणान्याह कामन्दकः ( १०।३ )
" राज्यस्त्रीस्थानदेशानां पौनस्य च धनस्य च । अपहारो मदो मानः पीडा वैषयिकी तथा ॥'
" वैषयिकी देशसबाधिनी । मित्रार्थं चापमानश्च तथा बन्धुविनाशनं ॥ "
" भूतानुग्रहविच्छेदस्तथा मण्डलदूषणं । एकार्थाभिनिवेशित्वमिति विग्रहयोनयः " ॥ ४५ ॥
कर्तव्याकर्तव्यविग्रहानाह स एव ( १०।२१ )
" तदात्वे फलसंयुक्तमायत्यां फलवर्जितं । आयत्यां फलसंयुक्तं तदात्वे विफलं स्मृतं ॥

१ अपसर्पति । २ बलेन । ३ तत्र । ४ मघबअनटघरई—विचेष्टयेत् । ५ यस्मात् । ६ मझघ—अलब्ध्वा । ७ शक्तिमान् । ८ अदेशस्थो । ९ नजातु । १० खअनटघबध—यानस्य । ११ घयबअनट—धनस्य च । १२ ब—आयत्यां, कघबअनई—आयत्यां ।

उभयो फलवानुत्तमः । एव त्रैविध्य । उभयमपि मध्यम । यस्तु तदात्वायत्योरफल सोऽधम. ।
विग्रहशमन चावश्य कुर्यादित्याह स एव (१०।१२–१३)
“ कुर्याद्दर्पपरित्याग एकार्थाभिनिवेशने । धनापचारजाते तु विरोध न समाचरेत् ॥
“ कदाचिद्विग्रहे पुसा सर्वनाशस्तु जायते । सर्वोपायैरतो राजा विग्रह न समाचरेत् ॥
“ उपायान्तरनाशे तु स्व त विग्रहमाचरेदिति । ” इति विग्रहः ॥
यानमाह कामन्दक (११–१) “ गुणानुरागप्रकृतेर्यात्रा यानमिति स्मृतमिति । ”
तत्काल मनुराह ( अ ७।१८३–१८४ )
‘ मार्गशीर्षे शुभे मासे यायाद्यात्रा महीपतिः । फाल्गुने वाथ चैत्रे वा मास प्रति यथाबल ॥
‘ अन्येष्वपि च मासेषु यदा पश्येद्ध्रुवं जय । यदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपो. ॥ ”
वर्षादिष्वपीत्यर्थः । मिहिरोऽपि
“ यात्रा नृपस्य शरदीष्टफला मधौ च छिद्र रिपोर्न नियमोऽस्ति तु केचिदाहुरिति ॥ ”
तद्भेदा उक्ता नीतिसारे ( ११।२–६,९–११ )
“ विगृह्य सधाय तथा सभूयाथ प्रसगत. । उपेक्षया च निपुणैर्यान पचविध स्मृत ॥
“ विगृह्य याति हि यदा सर्वान् शत्रोर्गणान् बलात् । विगृह्ययान यानज्ञास्तदाचार्याः प्रचक्षते ॥
“ अरिर्मित्राणि सर्वाणि स्वमित्रै सर्वतो बलात् । विगृह्य चारिभिर्गन्तु विगृह्य गमन स्मृत ॥
“ सधायान्यत्र या यात्रा पार्ष्णिग्राहेण शत्रुणा । सधाय गमन प्रोक्त तज्जिगीषो· फलार्थिन· ॥
“ एकीभूय यदैकत्र सामन्तै सापरायिकैः । शक्तिशौर्ययुतैर्यान सभूयगमन हि तत् ॥
“ अन्यत्र प्रस्थित. सगादन्यत्रैव च गच्छति । प्रसगयान तत्प्रोक्तमत्र शल्योनिदर्शनं ॥
“ रिपु यातस्य बलिन सप्राप्याविकृत फल । उपेक्ष्य तस्मिन्ययानमुपेक्षायानमुच्यते ॥
“ निवातकवचान्हित्वा हिरण्यपुरवासिन । उपेक्षायानमास्थाय निजघान धनजय ” इति ॥
यान चाग्रे पुनर्निरूपयिष्याम । इति यान ॥
आसनमुक्त नीतिसारे ( ११।१३ ) “ परस्परस्य सामर्थ्याद्विघातादासन स्मृतमिति । ”
तथा ( ११।१५–१७ )
“ यदा दुर्गस्थित शत्रुर्ग्रहीतु नैव शक्यते । विगृह्यैनं तदाऽऽसीत छिन्नास्यासारवीवधान् ॥
“ विच्छिन्नवीवधासार प्रक्षीणयवसेंधन । विगृह्यमाणप्रकृति कालेनैव शम नयेत् ॥
“ अरेश्च विजिगीषोश्च विग्रहे हीयमानयो । सधाय यदवस्थान सधायासनमुच्यते ॥ ”
सर्वत्र च देशकालानुरोधेनासन कार्यमिति । इत्यासन ॥
द्वैधीभावोऽप्युक्तो नीतिसारे ( ११।२४ ) “ द्वैधीभावेन तिष्ठेत काकाक्षिवदलक्षित ” इति । तथा
“ द्वैधीभावो द्विधा प्रोक्तः स्वतत्रपरतत्रयो । स्वतत्र उक्तो ह्यन्यस्तु य स्यादुभयवेतनः ” ॥ २७ ॥
इति द्वैध ॥ आश्रय उक्त कामन्दकेन ( ११।२८ )
“ उच्छिद्यमानो बलिना निरुपायप्रतिक्रिय । कुलोद्भूत सत्यमार्यमाश्रयेत बलोत्कटम् ॥

---

१ तन्निरोध न मु पा । २ उपेक्षा चेति । ३ यात्रायां । ४ वर्तेत । ५ क्ष—काकाक्षिवद । ६ कुलोद्भुत ।

" बुध्यैवोपक्रम श्रेयान् फलनिष्पत्तये सदा । उपायेन पदं मूर्ध्नि न्यस्यते मत्तहस्तिना ॥ ४६ ॥
" अयोऽभेद्यमुपायेन द्रवतामुपनीयते ॥ ४७ ॥ लोकप्रसिद्धमेवैतत् वारि वन्हेर्नियामक ॥ ४९ ॥
" उपायोपगृहीतेन तेनैतत्परिशोष्यते ॥ ५० ॥"

उपाय. कष्टाहादिप्रक्षेप । अतः सर्वमुपायेन कुर्यादित्यर्थः । मनुः ( ७।१७७ )

" यदि तत्रापि सपश्येद्दोष सश्रयकारित । सुयुद्धमेव तत्रापि निर्विर्तर्क. समाश्रयेत् ॥ "

इत्याश्रय । एवविध मंत्र मंत्रिभि' षाड्गुण्यविदा ब्राह्मणेन च सह कुर्यात् । मनु' ( ७।१७८ )

" सर्वोपायैस्तथा कुर्यान्नीतिज्ञः पृथिवीपति । यथास्याभ्यधिका न स्युर्मित्रोदासीनशत्रव" ॥ इति ।

तान् द्वादशराजमडलोक्त्याह याज्ञवल्क्य. ( आचारे ३४५ )

" अरिर्मित्रमुदासीनोऽनंतरस्तत्परःपर । क्रमशो मडल चिंत्य सामादिभिरुपक्रमै ॥ "

ते च त्रयस्त्रिविधा । सहजाः कृत्रिमा प्राकृताश्चेति । तत्र सहजोऽरि सापत्नभ्रातृपितृव्यतत्पुत्रादि. । कृत्रिमो रिपुर्यस्यापकृतं येनापकृत वा । प्राकृतश्चानतरदेशाधिपतिः । सहज मित्र भागिनेयपैतृ-स्वस्रीयमातृष्वस्रीयादि । कृत्रिम मित्र येनोपकृत यस्य चोपकृत । प्राकृत मित्रमेकातरित-देशाधिपतिः । सहजकृत्रिमशत्रुमित्रलक्षणराहितौ सहजकृत्रिमोदासीनौ । प्राकृतोदासीनो द्व्यतरदेशाधिपतिः ॥

अरिः पुनश्चतुर्विध । यातव्योच्छेत्तव्यपीडनीयकर्शनीयभेदेन । तत्र यातव्योऽनतरदेशाधिपति । व्यसनी हीनबलो रिक्तप्रकृति । विदुर्गो मित्रहीनो दुर्बलश्चोच्छेत्तव्य । पीडनीयो मत्रबलहीनः । प्रबलमत्रयुक्त' कर्शनीय । तथा च राजमानसोल्लासे

" निर्मूलनाशमुच्छेद पीडन बलिनिग्रह । कर्शनं तु पुन प्राहु कोशदडापकर्शनादिति ॥ "

मित्र च द्विविध । बृहणीय कर्शनीयमिति । कोशबलहीन बृहणीयं । कोशबलाधिक कर्शनीय । प्राकृतारिमित्रोदासीनानाह " अनतरस्तत्पर पर" इति । अनतर प्राकृतोऽरिस्तत्पर प्राकृत मित्र । तस्मात्परः प्राकृत उदासीन । शेषा पुन' प्रसिद्धत्वान्नोक्ताः । एतद्राजमडल क्रमश. पूर्वादिक्रमेण चिन्त्य । एव चतुर्दिक्षु । त्रयस्त्रय आत्मा चैक इति त्रयोदशराजक मडल पद्माकार । ये च पार्ष्णिग्राहादयस्तेऽप्यत्रैवातर्भवति । सामादिभिरित्युक्त तान्सामादीनुपायानाह याज्ञ-वल्क्य ( आचारे ३४६ )

" उपाया साम दान च भेदो दडस्तथैव च । सम्यक् प्रयुक्ता सिद्ध्येयुर्दडस्त्वगतिका गति ॥

भेद' शत्रुसामताद्दीना परस्पर वैरोत्पादन । स एव

" स जेतु न्यायतोऽशक्यो लुब्धेनाकृतबुद्धिना । सत्यसधेन शुचिना सु सहायेन धीमता ॥
" यथाशास्त्र प्रयुक्त' स सदेवासुरमानुष । जगदानदयेत्सर्वमन्यथा तु प्रकोपयेत् ॥
"अधर्मदडन स्वर्गकीर्तिलोकविनाशनम् । सम्यक्तु दडन राज्ञः स्वर्गकीर्तिजयावह ॥" मनुः(८।१२९)
" अदड्यान्दडयन् राजा दड्याश्चैवाप्य दडयन् । अयशो महदाप्नोति नरक चैव गच्छतीति ॥"

---

१ तेनैव मु पा

वंडप्रकार वंड्यावंड्यव्यवस्था व्यवहारमयूखे ( पृ. १०९ ) द्रष्टव्याम ।
" एव मत्रयित्वाऽन्तःपुर शोधयित्वा प्रविशेत् । यथोक्त ( नीतिसारे ७।३७ )
" कारयेद्वनशोधनमाबौ मातुरतिक्रमपि प्रविविक्षु¹ ।
" आप्तशस्त्र्यनुगतश्च विशेच्च संकटे च गहने च न तिष्ठेत् ॥"
तथा "निर्गमे च प्रवेशे च राजा मार्गे समतत । प्रोत्सारितजन गच्छेत्सम्यगाविष्कृतोन्नति. (३९)॥
" यात्रोत्सवसमाजे तु जलसबाधशालिन । प्रदेशानावगाहेत नातिवेल च सवनेत् ॥ ४० ॥
" निषेवितो वर्षधरै. कञ्चुकोष्णीषशालिभि । अत पुरे च विचरेत्कुब्जकैरासवामनै² ॥ ४१ ॥
" नीचैरत पुरामात्याः शुचयश्चित्तवेदिन । शस्त्राग्निविषवर्जं हि नर्मयेयुर्महीपतिं" ॥ ४२ ॥
अत पुरशोधनमाह कामदक ( ७।४४ )
" आशीतिकाश्च पुरुषाः पचाशीत्यश्च योषित । कुर्युरवरोधानां शौचमागारिकाश्च ये ॥
" अभ्यतरगतोऽपीह विश्वास स्त्रीषु न व्रजेत् ॥ ५ ॥
" देवीगृहगतं भ्राता भद्रसेनमहारयत् । मातु शय्यातरे लीन कारूष चौरस सुतः ॥ ५१ ॥
" न हि देवीगृह गच्छेदात्मीयात्सन्निवेशनात्" ॥ ५० ॥
तथा स्त्रीणा चरितमुक्त नीतिसारे ( ७।५२।५५ )
" विशेषेण तु सयोज्य मधुनेति विलोभित । देवी तु काशिराजेंद्र निजघान रहोगतं ॥
" विषाक्तेन च सौवीर मेखलामणिना नृप । वेण्या शस्त्रीं समादाय तथा चापि विदूरथ ॥
" इति³ वृत्त परिहरेत्नरांश्चापि प्रयोजयेत् ॥
" यस्य दारा सुगुप्ता स्युः पौरैश्चैराप्तकारिभि । सर्वलोकान्वित तस्य हस्ते लोकद्वय स्थित "॥
एव सावधानोऽत पुर प्रविशेत् । अथ भार्यागमनमुक्त कामदकेन ( ७।५६ )
" धर्ममिच्छन्नरपति सर्वान्दाराननुक्रम । गच्छेदनुनिशा नित्य वाजीकरणबृंहितः " ॥
वाजीकरणादिक च कामशास्त्रादवगतव्यं । विस्तृतिमयान्नेह निरूपित । नीतिसारे
" विचार्य कार्यावयवान् दिनक्षये विसृज्यलोक प्रमदाहृतक्रिय ॥
" सशौर्यबन्धेन हि साधुपाणिना स्वपित्यसक्त परमाप्तरक्षित " ॥ तथा
" नयेन जाग्रत्यनिश नरेश्वरे सुखं स्वपतीह निराधय प्रजा ॥
" प्रमत्तचित्ते सति जाग्रति प्रजा प्रजागरेणास्य जगत्प्रबाधते" ॥ ५८ ॥ इति ॥
एव तिष्ठत फलमाह वराहमिहिर
' आचारस्थ सागराता धरित्रीं भुके दीर्घं कालमुत्खातशत्रु ॥
" यत्राचारस्तत्र धर्मस्य वृद्धिर्धर्माद्भोगान्देहभेदेऽपि भुक्ते ।" भारते
" धृतिः शमो दम शौच कारुण्य वागनिष्ठुरा । मित्राणा चानभिद्रोह एताश्च समिध' श्रियः ॥"
समिधो वर्द्धनानि । इति सपरिकरस्वामिनिरूपण ।

---

१ भारिनि । २ शस्त्राश्च । ३ लाक्षान् विषेण सयोज्य । ४ विषदिग्धेन । ५ शस्त्री । ६ अहिवृत्त । ७ चक्षुषी चापि । ८ पुरुषै । ९ भोगा । १० हर । ११ आशस्त्रबन्धेन । १२ स्वपत्यसक्त. । १३ स्वपितीह ऽक्रमयात् ।

**अथामात्य** । तत्र पुत्रोऽप्यमात्यमध्ये परिगणितो **नीतिसारे**
" अमात्यो युवराजश्च भुजावेतौ महीपतेरिति । राजपुत्रस्य कृत्यमुक्त "
" पितृसेवापरस्तिष्ठेत्कायवाङ्मानसै सदा । तत्कर्म कुर्यान्नियतं येन तुष्टो भवेत्पिता ॥
" तन्न कुर्याद्येन पिता मनागपि विषीदति ॥" तथा
" यस्मिन्पितुर्भवेत्प्रीतिः स्वयं तस्मिन् प्रिय चरेत् । यस्मिन्द्वेष पिता कुर्यात्स्वस्यापि द्वेष्य एव सः ॥
" असंमत विरुद्धं च पितुर्नैव समाचरेत् । प्राप्यापि युवराजत्व प्राप्नुयाद्विकृतिं न च ॥
" स्वस्रपत्निमद्राश्चैव मातर पितरं तथा । भ्रातर भगिनीं चापि अन्यान्वा राजवल्लभान् ॥
" महाजनांस्तथा राष्ट्रे नावमन्येन्न पीडयेत् । प्राप्यापि महतीं वृद्धिं वर्त्तेत पितुराज्ञया ॥
" पुत्रस्य पितुराज्ञा हि परम भूषण स्मृत । सोदरेषु च सर्वेषु नाधिक्य संप्रदर्शयेत् ॥
" भ्रातृणामवमानेन बहवो हि विनाशिताः । पितुराज्ञोल्लघनेन प्राप्यापि पदमुत्तमम् ॥
" तस्माद्भ्रष्टा भवतीह दासवद्राजपुत्रकाः ॥
" एव गृहाविरोधेन राजपुत्रो वसन् गृहे । त्यागी च सत्वसंपन्न सर्वान्कुर्याद्वशे स्वके ॥
" शनै शनै. प्रवर्द्धेत शुक्लपक्षमृगाकवत् ॥
" एव वृत्ता राजपुत्रो राज्यं प्राप्याप्यकंटक । सहायवान् महामात्यो चिर भुक्ते वसुंधरा ॥
एतच्च राजपुत्रेविशेषमात्रमुक्त । सामान्यास्तु पूर्वोक्ता वक्ष्यमाणाश्च गुणाः सर्वे अपेक्षिता एव । तेषां राजपुत्राणां रक्षण प्रयत्नतः कुर्यादित्याह **कामदकः** ( ७।१–६ )
" प्रजार्थं श्रेयसे राजा कुर्वीतात्मजरक्षण । लोलुभ्यमानास्तेऽर्थेषु हन्युरेनमरक्षिता ॥
" राजपुत्रा मदोद्धूता गजा इव निरकुशा । भ्रातर चाभिनिघ्नति पितर चाभिमानिन ॥
" राजपुत्रैर्मदोद्धूतै प्रार्थ्यमानमितस्तत । दुःखेन रक्ष्यते राज्य व्याघ्राघ्रातमिवामिषं ॥
" रक्ष्यमाणा यदि च्छिद्र कथचित्प्राप्नुवंति ते । सिंहशावा इव घ्नति रक्षितारमसंशयम् ॥
" विनयोपग्रहान् भूत्यै कुर्वीत नृपति सुतान् । अविनीतकुमार हि कुलमाशु विनश्यति ॥
" विनीतमौरस पुत्र यौवराज्येऽभ्यषेचयेत् । दुष्ट गजमिवोद्धृत्त कुर्वीत सुखबधन ॥" तथा
" लालनीय. पालनीयो भूषणीयस्तथैव च । अर्थशास्त्र शिक्षणीयो यथा स्याद्विनयी सूतः ॥"
दुर्वृत्त प्रत्याह ( ७।७–८ )
" राजपुत्र सुदुर्वृत्त परित्याग हि नार्हति । क्लिश्यमान स पितर परानाश्रित्य हति हि ॥
" व्यसने सज्जम न हि क्लेशयेद्व्यसनाश्रयैरिति ।" इति राजपुत्रनिरूपणम् ।
अमात्यस्त्रिविध । उत्तममध्यमाधमभेदात् । तदुक्त **महाभारते** (      )
" त्रिविधा पुरुषा लोके उत्तमाधममध्यमा । तेषां च समवेताना गुणदोषान्वदाम्यह ॥
" मंत्रिभिर्हितसंयुक्ते समर्थैरर्थनिश्चये । मित्रर्वापि समानार्थैर्बांधवैरप्यगर्हितै ॥
" समत्रायित्वा य कर्मप्रारभे सप्रवर्त्तते । धैर्याच्च कुरुते यत्न तमाहु. पुरुषोत्तम ॥
" एकोऽर्थान्विमशन्येको धर्मे च कुरुते मति । एक कार्याणि कुरुते तमाहुर्मध्यम नर ॥
"गुणदोषाननिश्चित्य दैवमेव व्यपाश्रित । करिष्यामीति य कार्योपेक्षक स नराधम ॥" इति॥

---

१ का वि । २ धंते ।

याज्ञवल्क्य (आ ३१२)
" स मन्त्रिण प्रकुर्वीत प्राज्ञान्मौलान् स्थिरान् शुचीन् तै सार्द्धं चिन्तयेद्राज्य विप्रेणाथ तत स्वयमिति ॥"
मनु संख्यामप्याह (७।५४)
"मौलान् शास्त्रविदः शूरान् लब्धलक्षान् कुलोद्भवान् सचिवान् सप्त चाष्टौ वा कुर्वीत सुपरीक्षितानिति॥"
लब्धलक्षाश्चतुरान् । मौलान्स्ववंशपरंपरायातान् । नीतिसारे (४।२५)
" कुलीना शुचय. शूरा श्रुतवंतोऽनुरागिण । दंडनीते. प्रयोक्तार. सचिवा. स्युर्महीपते. ॥
तथा " स्मृतिस्तत्परतार्थेषु वितर्को ज्ञाननिश्चय । दृढतामनुगुप्तिश्च मन्त्रिसपत्प्रकीर्तिता ॥
" सज्जमानमकार्येषु निरुन्ध्युर्मन्त्रिणो नृप । गुरूणामिव चैतेषा शृणुयाद्वचन नृप ॥"
पुरोहितकृत्यं तत्रैव (१।४१)
" त्रय्या च दण्डनीत्यां च कुशलोऽस्य पुरोहित । अथर्वविहित कर्म कुर्याच्छांतिकपौष्टिकं ॥
" तादृक्सांवत्सरोऽप्यस्य ज्योति शास्त्रस्य चिंतक । प्रश्नाभिधानकुशलो होरागणिततत्त्ववित् ॥ "
इत्यमात्यादिनिरूपणम् । सुहृन्निरूपणं तु प्रायश पूर्वं कृतमेव । गुणास्तु केचनोच्यन्ते ।
अमात्याना सेवकमध्येऽतर्भाव । सुहृदस्तु मित्राणीति भेद. । तेषां कृत्यमुक्तं कामन्दकेन (४।४४-४६)
" नृपस्य ते हि सुहृदस्त एव गुरवो मता । य एनमुत्पथगत वारयन्त्यनिवारिता ॥
" सज्जमानमकार्येषु सुहृदो धारयन्ति ये । सत्य तेनैव सुहृदो गुरवोगुरवो हि ते ॥
" कृतविद्योऽपि बलिना व्यक्तरागेण रज्यते । रागानुरक्तचित्तः सन् किं न कुर्याद्साम्प्रत ॥ "
तथा (४।६८-६९)
" त्यागविज्ञानसत्याढ्य महापक्षं प्रियवद । आयतिक्षेममद्वैध्य मित्र कुर्वीत सत्कुलं ॥
" समुत्पन्नेषु कृच्छ्रेषु दारुणेष्वप्यसशय । दर्शयत्यच्छहृदयं कुलीनश्चतुरस्तता ॥
" धर्मार्थकामसयोगो मित्रात्तु त्रिविध फल । यस्मादेतत्त्रय न स्यात्तन्न सेवेत पण्डित ॥ ७२ ॥
" शुचिता त्यागिता शौर्यं समानसुखदु खता । अनुरागश्च दाक्ष्यं च सत्यता च सुहृद्गुणा ॥ ७५ ॥
" तदर्थेहानुरागश्च सक्षिप्त मित्रलक्षण । यस्मिन्नैतत्त्र तन्मित्र तत्रात्मान न निक्षिपेत् ॥ ७६ ॥
न विश्वसेदित्यर्थः ।
" प्रायो मित्राणि कुर्वीत सर्वावस्थासु भूपतिः । बहुमित्रो हि शक्नोति वशे स्थापयितु रिपून् ॥
" न तत्र तिष्ठति भ्राता न पिताऽन्योऽपि वा जनः । पुंसामापत्प्रतीकारे सन्मित्र यत्र तिष्ठति ॥
" अमित्रान् सर्वतो मित्रैर्निगृण्हीयाद्दृढव्रतो रिति " ॥ इति सुहृन्निरूपण ॥
अथ कोश । तस्य मुख्यत्वमाह वराहमिहिरः
" कोशो हि राज्यतरुमूलमतो हि शाखा पक्षी विपक्ष इव किं निधन करोति ।
" अन्नाद्विवेंद्रियगणो वसुतस्तयार्थं तत्प्रतिरक्षणविवृद्धिषु यत्नवान्स्यात् " ॥ भारते
"मधुदोह दुहेद्राष्ट्र भ्रमरा इव पादपान्वत्सापेक्षी दुहेच्चैव स्तनाश्च न विकुट्टयेत्" ॥विकुट्टयेच्छोषयेत्॥तथा
" य. कश्चिज्जनयेदर्थं राज्ञा रक्ष्यः स मानव । यो राजकोशं नश्यन्तमाचक्षीत युधिष्ठिर ॥

---

१ नति मु पा । २ का मु. पा
७-८

" श्रोतव्यमस्य च रहो रक्ष्यश्चामात्यतो भवेत् । अमात्या ह्युपहर्त्तारं घ्नन्ति वा प्रति भारत ॥"
उपहर्त्तारं राज्ञे निवेदयितारं ।
" राजकोशस्य गोप्तारं राजकोशविलोपकाः । सर्वे तमनुधावंति स विनश्यत्यरक्षितः । "
अनुधावंति मारयितुं धावंतीत्यर्थः । **कामंदकः** ( ४।६२–६३ )
" वर्द्धमानोऽल्पनिस्रावः स्यात् पूजितदैवतः । ईप्सितद्रव्यसंपूर्णो हृद्य आप्तैरधिष्ठितः ॥
" मुक्ताकनकरत्नाढ्यः पितृपैतामहोचितः । गजेष्वारोपितः साधु शीघ्रयानैरधिष्ठितः ॥
" यत्र राजा तत्र कोशः कोशाधीना हि राजता ।" तथा
" धर्मार्जितो व्ययसहः कोशः कोशज्ञसंमतः ॥ ६३ ॥
" धर्महेतोस्तथार्थाय भृत्यानां भरणाय च । आपदर्थं च संरक्ष्यः कोशः कोशवता सदा ॥ ६४ ॥
" पुत्रादपि हि संरक्ष्यो भार्यायाः सुहृदस्तथा "। **नीतिसारे**
" नान्याय्यं च व्ययं कुर्यात्प्रत्यवेक्षेत चान्वहं । कृषिर्वणिक्पथो दुर्गं सेतुः कुंजरबंधनं ॥
" खन्यः करधनादानं स्वस्थचित्तोऽपि वर्द्धयेदिति "। भागा उक्ताः **शिवधर्मे**
" तस्मात्त्रिभागं वित्तस्य जीवनाय प्रकल्पयेत् । भागद्वयं तु धर्मार्थमनित्यं जीवितं यतः । "
भागत्रयं वित्तस्य एको जीवनाय द्वौ धर्माय । भागपंचकं कृत्वा त्रितयं जीवनाय भागद्वयं
धर्मायेति **हेमाद्रिः** । कृपणाशक्तविषये **भारते**
" एकां गां दशगुर्दद्याद्दश दद्याच्च गोशती । शतं सहस्रगुर्दद्यात्सर्वे समफलाः स्मृताः "॥ इति ।
दशांशं दद्यादिति भावः । इति कोशः । **राष्ट्रमुक्तं नीतिसारे** ( ६।३ )
" राज्यांगानां तु सर्वेषां राष्ट्राद्भवति संभवः । तस्मात्सर्वप्रयत्नेन राजा राष्ट्रं प्रसादयेत् ॥
" तस्मादसाधून् पापिष्ठान् निघ्नन्पापैर्न लिप्यते । ये ये प्रजाः प्रबाधेरंस्तांस्तान् छिंद्यान्महीपतिः ॥
" धर्मार्थं क्रियमाणं हि शंसंत्यागमवेदिनः । स धर्मोऽयं विगर्हंति तमधर्मं प्रचक्षते ॥ ७ ॥
" धर्माधर्मौ विजानन् हि शासनेऽभिरतः सतां । प्रजा रक्षेन्नृपः साधु हन्याच्च परिपंथिनः ॥ ८ ॥
" राष्ट्रोपघातं कुर्वीरन् ये पापा राजवल्लभाः । एकैकशः संहतान्वा दुष्टास्तान्परिचक्षते ॥ ९ ॥
" दुष्टानुपांशुदंडेन हन्याद्राजाविलंबितं । अदृश्य वा प्रकाशं वा लोकद्वेषं समाश्रितान् ॥ १० ॥ तथा
" अरक्ष्यमाणाः कुर्वंति यत्किंचित्किल्बिषं प्रजाः । तस्मात्तु नृपतेरर्द्धं यस्माद्गृह्णात्यसौ करान् ॥
" सर्वतो धर्मषड्भागो राज्ञो भवति रक्षितुः । अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षितुः ॥
" यथा बीजांकुरः सूक्ष्मः परिपुष्टोऽभिरक्षितः । काले फलाय भवति साधुस्तद्वदियं प्रजा ॥
" उद्वेजयति तीक्ष्णेन मृदुना परिभूयते । तस्माद्यथार्हतो दंडं नयेत्पक्षमनाश्रितः ॥ "
**याज्ञवल्क्यः** (आ ३३६) "पीड्यमाना प्रजा रक्षेत् कायस्थैश्च विशेषतः" इति । **भारतेऽपि**
" उच्छिद्यते धर्मवृत्तमधर्मो वर्तते महान् । भयमाहुर्दिवारात्रं यदा पापो न वार्यते"॥ इति । **राजधर्मेषु**
" विक्रयं क्रयमध्वानं भक्तं च सपरिव्ययं । योगक्षेमं संप्रेक्ष्य वणिजः कारयेत्करान् ॥
" उत्पत्तिं दानवृत्तिं च शिल्पं संप्रेक्ष्य चासकृत् । शिल्पं प्रतिकरानेव शिल्पिनः प्रतिकारयेत् ॥
" तथा यथा न हीयेरन् प्रजाः कुर्यान्महीपतिः । संत्यजंति परित्यार्तं राजानमतिखादिनं ॥

---

१ वर्द्धमानोऽल्पम् मु. पा । २ ह्य–क्षको । ३ अटनयथवर्ह–राज्य

" न कर्म कुरुते वत्सो भृश दुग्धो युधिष्ठिर । राष्ट्रमप्यातिदुग्ध हि न कर्म कुरुते महत् ॥
" यो राष्ट्रमनुगृण्हाति परिगृह्य स्वय नृप । सजातमुपजीवन्स लभते सुमहत्फल ॥
" पौरान् जानपदान्सर्वान् सश्रितोपाश्रितास्तथा। यथाशक्त्यनुकम्पेत सर्वानप्यधनानपि ॥" तथा
" प्रचार भृत्यभरण व्यसन ग्रामतो भय । योगक्षेम च सप्रेक्ष्य गोमिन कारयेत्करं ॥"
तथा " दयावानप्रमत्तश्च करान्संप्रणयेन्मृदूनिति" । इति राष्ट्र । दुर्गकरणार्थं भुवमाह कामन्दकः (४।५०-५१)
' भूगुणैर्वर्धते राष्ट्र तद्वृद्धिर्नृपवृद्धये । तस्माद्गुणवतीं भूमिं भूत्यै भूपस्तु कारयेत् ॥
' सस्याकरवती पुण्या खनिद्रव्यसमन्विता । गोहिता भूरिसलिला पुण्यैर्जनपदैर्वृता ॥
" रम्या सकुंजरवना वारिस्थलपथान्विता । अदेवमातृका चेति शस्यते भूर्विभूतये ॥ "
निषिद्धभूमिमाह स एव
" सशर्करा सपाषाणा साटवी नित्यतस्करा । रूक्षा सकटकवना सव्याला चेति भूरभू ॥
रूक्षाऽन्यदेशापेक्षया चतुर्गुणपंचगुणादिजलसेकेन सस्यजननी । जनपदमाह स एव (४।५४-५५,५६-५७)
" स्वाऽजीव्यो भूगुणैर्युक्त' मानृथ पर्वताश्रय । शूद्रकारुवणिक्प्रायो महारम्भकृषीबलः ॥
" सानुरागो रिपुद्वेषी पीडाकरसह पृथु । नानादेश्यै समाकीर्णो धार्मिक पशुमान् धनी ॥
" त वर्द्धयेत्प्रयत्नेन तस्मात्सर्वं प्रवर्त्तते " ॥ पुरमाह
" पृथुसीममहाखातमुच्चप्राकारगोपुरं । समावसेत्पुरं शैल सरिन्मरुवनाश्रय " ॥
याज्ञवल्क्य॰ ॥ ( आ ३२१ )
" रम्य पशव्यमाजीव्यं जागल देशमावसेत् । तत्र दुर्गाणि कुर्वीत जनकोशात्मगुप्तये " ॥
पशव्य पशुवृद्धिकर । कदमूलफलादिभिराजीव्य। जांगल सजलतरुपर्वत। दुर्गमाह मनु[1](७।७०)
" धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव च । नृदुर्गं गिरिदुर्गं च समाश्रित्यावसेत्पुरं " ॥
कामन्दकस्तु ( ४।५९ ) ऐरिणमपि पपाठ
" औदक पार्वत वार्क्ष ऐरिण धन्वमानव । प्रशस्त शास्त्रमतिभिर्दुर्गं दुर्गोपचिंतकैः " ॥
इरिणमूषर । धन्व निरुदक स्थल मरुभूमिरित्यर्थ । महीदुर्गमित्यत्र मह्या दुर्गं । महीरूपमेव वा ॥
तच्च मार्तिक पाषाणमैष्टक वा । तथा च महाभारते ( शा प ८६।५ ) महीदुर्गापेक्षया मृद्दुर्गस्य पृथङ्निर्देश कृत
" धन्वदुर्गं महीदुर्गं गिरिदुर्गं तथैव च । मनुष्यदुर्गं मृद्दुर्गं वनदुर्गं च तानि षडिति ॥ "
बधुदुर्गं सोदरादिभ्रघना राजगृहस्य परित' स्थानानि ।
तत्र बधुदुर्गमनुष्यदुर्गयो पृथग्ग्रहण गोबलीवर्दन्यायेन । अतरंगत्वाच्छूरत्वाच्च बंधूनां पृथङ्निर्देशः। तथा
यावद्बधुदुर्गं सभवति तावन्नितरमनुष्यदुर्गं न कुर्वीतेति । एव च दुर्गस्य नवत्व संपद्यते ।
धन्वदुर्गं महीदुर्गमित्यत्र द्वे । जलदुर्गं । वृक्षदुर्गं । नृदुर्गं । गिरिदुर्गं । बधुदुर्गं ।

---

1 घखअटनई-कया ।

ऐरिणदुर्गं । महीदुर्गे तु मृदादीना विशेषः पूर्वमुक्त एव। दुर्गस्य गुणमाह मनु ( ७।७४ )

“ एकः शत योधयति प्राकारस्थो धनुर्द्धरः । शत दशसहस्राणि तस्माद्दुर्गं समाश्रयेत् ” ॥

शतगुणा अपि पराभव प्राप्नुवतीत्यर्थ । तत्र सर्वदुर्गाणां प्राशस्त्ये च गिरिदुर्गे विशेषमाह मनुः ( ४।७१ )

“ सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत् । एतेषां बाहुगुण्येन गिरिदुर्गं विशिष्यते ” ॥

एतेषामिति निर्द्धारणे षष्ठी । तद्विशिनष्टि मनु ( ४।७५ )

“ तत्स्यादायुधसपन्नधनधान्येन वाहनैः । ब्राह्मणैः शिल्पिभिर्मन्त्रैर्यवसेनोदकेन्धनैः ॥ ”

मन्त्रैः सर्पादिमन्त्रविद्भिर्मनुष्यैरित्यर्थ । भारते दुर्गं प्रकृत्य

“ शूरान्यजनसपन्न ब्रह्मघोषानुनादितं । वश्यामात्यबलो राजा तत्पुर स्वयमाविशेत् ॥ ”

“तत्र कोश बल मित्र व्यवहार च वर्धयेत् ” इति । मनु ( ४।७६ )

“ तस्य मध्ये तु पर्याप्त कारयेद्गृहमात्मन । गुप्त सर्वर्तुक शुभ्र जलवृक्षसमन्वितमिति ॥”

‘ सर्वर्तुक आरामादिषु तत्तदृतुफलिवृक्षसहित । तत्तदृतूद्भवफलपुष्पादिसहित वा । तत्तदृतूपयोगिसामग्रीसहित सर्ववस्तुसमन्वितमित्यर्थ । इति दुर्गं ।

अथ बलम् । तत्र मुहूर्त्ताद्यपेक्षया बलस्य प्राधान्यमाह वराहमिहिरः

“ ग्रहर्क्षतिथ्युद्गमराशिहोराद्रेक्काणभागाद्यनुकूलमात्र। भवेद्यथासौ यदि सिद्धिहेतुः स्वयमवेद्दैवविदेव राजा॥

“ मन्त्राभिषेकमणिबन्धनशान्तिकर्महोमोपवाससुरयागजपादिमात्र ।

“ स्यात्सिद्धिहेतुरथ चेद्विजिगीषतोरीन्कस्मात्तदा नरपतिर्न भवेत्पुरोधाः ॥” तथा

“ बुध्वाऽर्थशास्त्राण्यपि मन्त्रिणोऽपि कुर्युः प्रणाम न नरेश्वराणा ।

“ यद्याभिजात्याद्द्विपवाजिपत्तिकोशाद्यपेक्षा न भवेत्प्रधान ॥

अतोऽवश्यं बलकोशाधीन राज्य । ननु । जयपराजयादिकं सर्व कर्माधीन तत्र किं बलादिनेति चेत् । उच्यते । न केवल सर्व कर्माधीन किंतु पुरुषकाराधीनमपि। उक्त च याज्ञवल्क्येन(आ ३५१),

“ यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत्।एव पुरुषकारेण विना दैव न सिद्ध्यति॥ माघेऽपि

“ नालम्बते दैष्टिकता न निषीदति पौरुषे । शब्दार्थौ सत्कविरिव द्वय विद्वानपेक्षत ॥ ” इति ।

कथ तर्हि क्वचित्पुरुषकारे कृतेऽपि न फलप्राप्ति । उच्यते । न वय कर्मण कारणत्वमेव खडयामः किंतु तन्मात्रस्य । वस्तुतस्तु न हि कर्म पुरुषकारापेक्षया भिन्नमस्ति । पूर्वजन्मार्जितः पुरुषकारो हि कर्मोच्यते । अतो यदिह जन्मनि द्वाभ्यामेकजातीये प्रयत्ने कृते फलावाप्ति- रेकस्यैकस्य न ततो नूनमेकस्य प्राक्तन पुरुषकारो नास्ति । पापरूपो वा सप्रतिबधक इति कल्प्यते । अतः सर्व कर्मापरपर्याय पुरुषकाराधीनमेव । अत एवोक्त भारते

“ स्वकर्मणाशुभेनापि शुभेनाप्यथ वा जनः । फल तदनुरूप हि प्राप्नोति भरतर्षभ ” ॥

---

१ अरघईतकघटयब—दश । २ क—ते एषां । ३ कघटयबनअई—एषामिति । ४ बनयटघ—शूद्रान्यजन

अत **एवोत्तरमीमासायां** कस्यचिद्वर्तमानजन्मनि कर्मभि पापक्षये जाते सन्यासोत्तर मुक्ति.। यत्र तु कर्मस्वकृतेषु सन्यासोत्तर मुक्तिस्तत्र पूर्वजन्मार्जितानि **कर्माणि** कल्प्यते। अत एव क्षत्रियजनकस्य ज्ञानोत्पत्ति दृष्ट्वा प्राक्तनः संन्यासोऽपि कल्प्यत इत्युक्त। अतो यत्र लोकत. शास्त्रतो दृढतरः कार्यकारणभावोऽवगतस्तत्र कार्यं दृष्ट्वा कारणमनुमीयतेति। अतः सर्वत्र प्राक्तन ऐहिको वा पुरुषकार कारणमिति। अतः पुरुषकार एव राज्ञा कर्तव्य इति।

स च बलाधीन इत्यवश्यं बलसग्रह कार्यः। अत्र बल षड्विधमाह **कामन्दक** ( १८।२ )
"षड्विध तु बल व्यूह्य द्विषतोऽभिमुख व्रजेदिति।" "षड्विध बलमादाय प्रतस्थे दिग्जिगीषयेति" ( रघुवशे ) **कालिदासोऽपि**। तद्भेदा उक्ता **नीतिसारे** ( १८।४ )
" मौल भृत श्रेणिसुहृद्द्विषदाटविक बल। पूर्वं पूर्वं गरीयस्तु बलानां व्यसन स्मृतमिति "॥

पूर्वपूर्वस्य नाश कठिन इत्यर्थ। तत्र मौल नाम परपरागत। भृत यावद्विमवस्थायि। श्रेणि गमनमार्गे स्थाने स्थाने निवेशित। सुहृन्मित्रबल। द्विषता स्वाधीन यज्जात तद्द्विषद्बल।
" आटविक अरण्यसबधि। तत्र दूरदेशादौ मूलसहितो गच्छेदित्याह ( १८।१२।१४ )
" प्रकृष्टेऽध्वनि काले वा गच्छेन्मौलै समावृत। मौलास्तु दीर्घकालेऽपि क्षयव्ययसहिष्णव "॥
" एष वस्तुषु मेधावी भृतादीनि विवर्जयेत्। दीर्घाध्वकालखिन्नेषु तेषु भेदभय भवेत्॥
" बहुत्वाद्भृतसैन्याना दीर्घकालाध्वखेदत। नित्य प्रवासायासाभ्या भेदोऽवश्य प्रजायते "॥
भेद स्वामिपरित्याग। एवमन्येषामपि बलाना गुणदोषा ऊहनीया।

तत्र कस्मिन्काले किं बल ग्राह्यमित्याह **कामन्दक** ( १८।१०–११ )
" स्फीतसारानुरक्तेन बलेनोपचित पर। तत्तुल्येनैव यातव्य क्षयव्ययसहिष्णुना "॥
क्वचिद्भृतमपि ग्राह्यमित्याह स एव ( १८।१५ )
" प्रभूत स्व भूतबल मौलमल्पमसारवत्। अरेर्वीक्ष्यात्मनस्तद्धि विपरीत जयेदरीन्॥"
भूतबलेन मौल जयेदिति विपरीत। श्रेणिबलस्योपयोगमाह ( १८।१८ )
" स्फीत श्रेणिबलं शक्यमाधातु यानवर्त्मनि। नित्य प्रयाणव्यायामानि श्रेण्या समुत्पतेत्॥"
मित्रबलस्योपयोगमाह ( १८।२० )
" मित्रसाधारणे कार्ये मित्रायत्ते फलोदये। अनुग्राह्ये च पीड्ये च मित्रेणैव सह व्रजेत्॥"
अरिसैन्यस्योपयोगमाह ( १८।२१ )
" प्रभूतेनारिसैन्येन योधयेन्महतो रिपून्। अत्युच्छ्रित कोपनया ह्यभ्यासेन रिपोर्बल॥
" वासयेत्कर्षयेच्चैन दुर्गकटकशोधने " ( २२ )॥ आटविकस्योपयोगमाह
" नित्यमाटविक सैन्य दुर्गकटकशोधने। परदेशप्रवेशे च पुर कुर्वीत पण्डित॥" इति
पूर्वोक्तबलस्य चतुरगतामाह। "हस्त्यश्वरथपादात सेनागं स्याच्चतुर्विधमिति॥"

अथ **गजनिरूपणम्**। चतुर्विधा गजा। भद्रा मदा मृगा मिश्राश्चेति। तल्लक्षणमाह **वराहमिहिरः**(अ ६७)
" मध्वाभदन्ता. सुविभक्तदेहा न चोपदिग्धा न कृशा क्षमाश्च।
" गात्रै. समैश्चापसमानवंशा वराहतुल्यैर्जघनैश्च भद्रा ॥ १ ॥ " चाप धनुस्तस्य। तत्तुल्यपृष्ठाः।
" वक्षोथकक्षा वलय श्लथाश्च लबोदरस्त्वक्बृहती गलश्च।

१ ज्ञा—पातव्या। २ श्रेणीति मु पा। ३ हस्त्र मु पा। ४ **अन्वयटनरपविष**—वेशा।

" स्थूला च कुक्षि सह मेचकेन सैंही च दृक् मदमतगजस्य ॥२॥" कक्षाऽग्रिमपादद्वयोरुसंधिः । सैही सिंहसदृशछविरित्यर्थ. ।

" मृगास्तु ह्रस्वाधरबालमेढ्रास्तन्वङ्घ्रिकण्ठद्विजहस्तकर्णा ।

"स्थूलेक्षणाश्चेति यथोक्तलिंगै सकीर्णनागा व्यतिमिश्रसंज्ञाः॥३॥" मिश्रत्व भद्राणा मद्रादिसगेन । एवमन्यत्रापि । अथ परिमाणमाह

" पञ्चोन्नति सप्तमृगस्य दैर्घ्यं अष्टौ च हस्ता परिणाहमान ।

" एकद्विवृद्धावथ मदभद्रौ सकीर्णनागो नियतप्रमाण ॥४॥"मदस्य षडुन्नति । अष्टौ दैर्घ्यं । नवोदरपरिणाह । भद्रस्य सप्तोन्नति । नव दैर्घ्यं । दश परिणाहः । अन्यत्स्पष्ट । अत्र हस्तास्तिर्यग्यवोदराणीति कल्पनेन कार्यं । तेषा मदवर्णमाह स एव

" भद्रस्य वर्णो हरितो मदस्य मदस्य हारिद्रकसन्निकाश. ।

" कृष्णो मृगस्याभिहितो मदस्य संकीर्णनागस्य मदो विमिश्र' ॥५॥ " गजप्राशस्त्यमाह

" ताम्रोष्ठतालुवदना कलविकनेत्रा स्निग्धोन्नताग्रदशना पृथुलायतास्या. ।

" चापोन्नतायतनिमग्ननिगूढवंशास्तन्वेकरोमचितकूर्मसमानकुम्भा. ॥ ६ ॥ "

कलविकश्चटक. । तनून्येकजातीयानि रोमाणि । तै । तथा

" विस्तीर्णकर्णहनुनाभिल्लाटगुह्या कूर्मोन्नतैर्द्विनवविंशतिभिर्नखैश्च ।

" रेखात्रयोपचितवृत्तकरा' सुवाला धन्या सुगन्धिमदपुष्करमारुताश्चेति ॥ ७ ॥

द्विनवाष्टादशविंशतिर्वा नखानि कूर्मोन्नतानि । पुष्कर शुण्डाग्र । तथा

" मूलमध्यदशनाग्रसंस्थिता देवदैत्यमनुजा' क्रमात्तत ।

" दतभगफलमत्र दक्षिणे भूपदेशबलविद्रवप्रद ॥

" वामतः सुतपुरोहिते भयं हति साटविकदारनायकान् ॥ " आटविकोऽटव्यामधिकृतस्तत्सहिता दारनायका दाराधिकृता पुरुषास्तान् हति । भयं करोतीत्यध्याहार । तथा

" आदिशेदुभयगर्भदर्शनात्पार्थिवस्य सकल कुलक्षय ।

" सौम्यलग्नतिथिभादिभि शुभं वर्द्धते शुभमतोऽन्यथापर ॥

" क्षीरिमिष्टफलपुष्पपादपैश्चापगातटविघट्टनेन च । वाममध्यरदभगखडन शत्रुनाशकृदतोऽन्यथापर॥

"वल्मीकस्थाणुगुल्मक्षुपतरुमथन स्वेच्छया हृष्टदृष्टिर्यायायात्रानुकूल त्वरितपदगतिर्वक्त्रमुन्नाम्य चोच्चै।

" मक्ष्यासन्नाहकाले जनयति च मुहु शीकरे बृहते वा तत्काल वामदन्तान्निर्जयकृदथ रद वेष्टयन् दक्षिण च ॥

" स्खलितगतिरकस्मात्स्तकर्णोऽतिदीन श्वसिति मृदुसुदीर्घ न्यस्तहस्त पृथिव्या ।

" द्रुतमुकुलितदृष्टि स्वप्नशीलो विलोमो भयकृदहितभक्षी नैकशोऽसृक् सकृच्च " ॥

---

१ क्ष—चिन्हे.

अहितभक्षी रोमजनकतृणादिभक्षी । असृक् रुधिरं तत्सहितं शकृत् । तथा
" प्रवेशनं वारिणि वारणस्य ग्राहेण नाशाय भवेन्नृपस्य ॥
" ग्राहं गृहीत्वोत्तरणं द्विपस्य तोयात्स्थले वृद्धिकरं परं स्यात् " ॥
बंधनभूमीराह
" भद्रमंद्रमृगमिश्रदंतिनां श्वेतरक्तकनकोपमा सिता ।
" भूमयो द्विरदपुष्टिवृद्धिदा भूभुजामपि यशःसुखावहा " । शाला आह
" ज्येष्ठा चतुर्विंशतिरेव हस्ताद्विहीनिते मध्यजघन्यशाले ।
" विस्तारतस्तद्विगुणाश्च दीर्घा स्तंभाश्च विस्तारसमुच्छ्रिताः स्युः ॥" एते च शालास्तंभाः ।
अत्र पूर्वोक्तपरिमाणमध्ये बहूनां हस्तिनामसंनिवेशात्प्रतिहस्ति पूर्वोक्ता शाला ज्ञेया ।
स्तंभानां परिणाहमाह
" ज्येष्ठोंगुलानि बहलो दशषड्युतानि मध्यस्तु पंचदशकन्यसकोंगुलो न ॥
" स्तंभप्रमाणविपुला क्रमशो निषगा प्रोक्तांगुलार्द्धसदृश बहुलत्वमेषां ॥ "
निषगा बंधनरज्जवः । द्वारमाह
" द्वारोच्छ्रयः कुंजरयानतुल्यो विस्तारोऽस्य त्र्यंशहीनः स एव ।
" हीनो भूयश्चात्मषष्ठांशकेन शालाद्वारं प्रागुदक् च प्रशस्तं ॥ "
भूयः पुनः आत्मनस्त्र्यंशस्य षष्ठांशेन विस्तारः । एवं च द्वारमुपरि सूक्ष्ममधोभागे महच्च संपन्नं भवति ।
बंधनार्थं वृक्षानाह
" चंदनार्जुनशिरीषमधूका देवदारुसरलार्जुनशालाः ।
" रोहिणीखदिरचंपकशाकाः स्यंदनश्च सकदंबविशोकाः ॥
" शीताः शिवाश्च द्विपबंधनार्थमेते द्रुमाः पुष्टिकरा द्विपानां ।
" स्तंभार्थमन्येऽपि हि सारवंतः कार्याः प्रशस्ता गुणसंप्रयुक्ताः ॥ " तथा
" पूर्वाभिमुखो निबध्यते यः क्षिप्रं स करोति विक्रमं । राज्ञः समरेष्वनिर्जितो दीर्घं चायुरवाप्नुयाद्गजः ॥"
" उदङ्मुखो बंधमुपैति नागो योऽर्थस्य वृद्धिं स करोति भर्तुः ।
" प्राप्नोति पुष्टिं चिरजीविता च संग्रामकालेष्वपराजयं चेति " । अन्यदिङ्मुखेऽनिष्टमाह
" दक्षिणदिग्वदनस्य च बंधो जीवितनाशकरो द्विरदः स्यात् ।
" पश्चान्मुखो बंधमवाप्य नागो नित्यं भवेद्रोगनिपीडितांगः ॥
" नाशं च वित्तस्य करोति राज्ञस्तस्मात्स याम्यापरदिग्विवर्ज्यः " इति । बंधस्तंभमानमाह
" विशेषशान्या बंधनार्थं द्विपानां स्तंभा राज्ञः श्रेयसे दतिनश्चेति ।" अन्यविन्यस्यनिष्ट । तत्परिमाणमाह
" ज्येष्ठो वंशोच्चो नवमध्यमश्च स्तंभोऽष्टहस्तः कथितः कनीयान् ।
" सर्वे निखाताश्चतुरश्च हस्ता मानाधिकोनाश्च शिवाय न स्युः ॥ "

गजानां मदजननकान्यौषधानि तु हस्तिचिकित्सायां द्रष्टव्यानीति नेह प्रपंचितानि ।

इति सपरिकरगजनिरूपणं ।

अथाश्वलक्षणमुक्तं योगयात्रायां ( अ ६६।१ )

"दीर्घग्रीवाक्षिकूटस्त्रिकहृदयपृथुस्ताम्रताल्वोष्ठजिह्वः सूक्ष्मत्वक्केशवालः सुशफगतिमुखो ह्रस्वकर्णोष्ठपुच्छः॥
"जंघाजानूरुवृत्तः समसितदशनश्चारुसंस्थानरूपो वाजी सर्वांगशुद्धो भवति नरपतेः शत्रुनाशाय नित्य॥"

कूटं ललाटोर्ध्वभागः । त्रिकं कटिप्रदेशः । केशाः शरीरस्थिता बाला ग्रीवापुच्छगताः ।
गोबलीवर्दन्यायेन पृथग्ग्रहणं । जंघायां जानुनि वृत्तः । मंडलाकारः । समा निम्नोन्नतस्वरहिता ।
सिताः श्वेताः । इष्टानिष्टमाह ( अ. ९३ )

" उत्सर्गान्नशुभदमासनापरस्य वामे च ज्वलनमतोऽपरत्र शस्तं ।
" सर्वांगज्वलनमवृद्धिदं हयानां द्वे वर्षे दहनकणाश्च धूपनं च ॥ १ ॥
" अंतःपुरं नाशमुपैति मेढ्रे कोशः क्षयं यात्युदरे प्रदीप्ते ।
" भूपस्य पायौ च पराजयः स्याद्वक्त्रोत्तमांगज्वलने जयश्च ॥ २ ॥
" स्कंधासनांसज्वलनं जयाय वधाय पादज्वलनं प्रदिष्टं ॥
" ललाटवक्षोक्षिभुजे च धूमः पराभवाय ज्वलनं जयाय ॥ ३ ॥
" प्रद्वेषो यवसाम्भसां प्रपतनं स्वेदो निमित्ताद्विना कंपो वा वदनाच्च रक्तपतनं धूमस्य वा संभवः ॥
" अस्वप्नश्च विरोधतो निशि दिवा निद्रालसध्यानता सादोधोमुखता विचेष्टितमिदं नष्टं स्मृतं वाजिनां॥५

हेषितपरीक्षामाह मिहिरः ( अ ९३ )

" क्रौंचवद्रिपुवधाय हेषितं ग्रीवया त्वचलया च सोन्मुखं ।
" स्निग्धमुच्चमनुनादि हृष्टवद्ग्रासरुद्धवदनैश्च वाजिभिः ॥ ७ ॥
" पूर्णपात्रदधिविप्रदेवतागंधपुष्पफलकांचनादि वा ।
" द्रव्यमिष्टमथवापरं भवेद्धेषतां यदि समीपतो जयः ॥ ८ ॥
" वामैश्च पादैरभिताडयतो महीं प्रवासाय भवंति भर्तुः ।
" संध्यासु दीप्तामवलोकयतो हेषंति चेद्बंधुपराजयाय ॥ ९ ॥
" आरोहति क्षितिपतौ विनयोपपन्नो यात्रानुगोऽथ तुरगः प्रतिहेषितं च ।
" वक्त्रेण वा स्पृशति दक्षिणमात्मपार्श्वं योऽश्वः स भर्तुरचिरात्प्रकरोति लक्ष्मीं ॥ १३ ॥
" मुहुर्मुहुर्मूत्रशकृत्करोति न ताड्यमानोऽप्यनुलोमयायी ।
" अकार्यभीतोऽश्रुविलोचनश्च शिवं न भर्तुस्तुरगोऽभिधत्ते १४।" रथपतिलक्षणं लोकत एव ज्ञेयं ।

इत्यश्वादिलक्षणम् ॥ अथाभियोज्यनृपाः । योगयात्रायां

" शब्दायते मुहुरपि शिवा गर्दभध्वानतुल्यं । त्यक्तस्नेहाः परिजनसुहृत् वाहनोपस्करेषु ।
" कष्टं को नः शरणमिति वा वादिनो यस्य सैन्ये विद्विष्टा वा प्रचुरपुरुषाः सोऽभियोज्यो नृपेण॥
" कापोतकौलूकमधूनि यस्य समाश्रयंते ध्वजचामराणि ।
छत्रायुधादीनि च सोभियोज्यो यस्याथवानाहततूर्यशब्दः ॥

---

१ धक्षम—पाठ., ह्र-स्मि । २ चहा—चल्या । ३ दिग्यमिति मु. पा । ४ क—मुखीर्षा । ५ ह्र-चि ।

" अतीपमत्र सरितामिशोश्च शोषोऽथ वाऽशोष्यजलाशयानां ।
" अवारिदेशे सलिलप्रवृत्तिरव्वैकतं चाप्सु तरेच्छिला वा ॥
" भंगपातचलनान्यनिमित्त रोदनानि च सुरप्रतिमानां ।
" अग्निरूपमनलेन विना वो निश्चलानि च यदा प्रचलति ॥
" प्रसूतिवैकृत्यमकालपुष्पाण्यरण्यसत्वस्य पुरप्रवेश ।
" प्रदोषकाले कुक्कुवाकशब्दाहिमागमे चान्यभृतप्रलाप " ॥ अन्यभृत कोकिल ।
" दीर्घं दीन सहताः सारमेयाः क्रोशत्युच्चैर्नित्यमेवानृतौ च ।
" हन्युर्योषा योषितो निर्घृणाश्च श्वेत काको नक्तमिन्द्रायुध च ॥
अनृतौ शरत्कालादन्यत्र । अनृताविर्तीन्द्रायुधेऽप्यन्वेति ।
" अहातिरिक्त पवनोऽति चण्डो गधर्वसङ्गस्य भवेत्पुरस्य ।
" व्यक्तिर्भवेच्चाहनि तारकाणा नक्त च तारागणसप्रणाश ॥
" एव निमित्तानि यदा भवति तदाऽभियोज्या क्षितिपेन देशा ।"
**नीतिसारे** ( १७।२५।२९ )
" भेद कुर्वीत यत्नेन मन्त्र्यामात्यपुरोधसा । तेषु भिन्नेषु भेदे हि युवराजे तथोर्जित ॥
" अमात्यो युवराजश्च भुजावतौ महीपते । मत्री नेत्रे हि भिन्नेऽस्मिन्नेकास्मिन्नपि तद्विष ॥
" सर्वावस्थं हि मेधावी न कुलीन विकारयेत् । तत्रोपजाप कर्तव्यो य कोपानुग्रहक्षम ॥
" आगतान्पूजयेत्स्वामी निजाश्च परिसात्त्वयेत् ॥३७॥ भेद कुर्वीत मतिमान्निगृहीतो बलीयसा ॥३९॥
" दृढेन हि समाहन्याद्भित्वारे सहत बल । भिन्न हि तत्काष्ठमिव जतुभग्न विशीर्यते ॥ ४० ॥
" भेद नृप' कृत्वा ततो यायाद्रिपा पुरमिति[1] । एव सामदानमभयादिना भेद कृत्वेत्यर्थ ।
अथ **दूतप्रेषणमाह कामन्दक** ( १२।१ ) " यातव्याय प्रहिनुयाद्दूत दत्याभिमानिनं " ॥
स विशिनष्टि ( १२।२ )
" प्रगल्भ स्मृतिमान्वाग्मी शास्त्रे चास्त्रे च निष्ठित । अभ्यासकर्माभिरतो दूतो भवितुमर्हति ॥"
" तत्त्रैविध्यमाह ( १२।३ ) " निसृष्टार्थो मितार्थश्च तथा शासनवाहक "।
तत्र यो शिक्षितमव देशकालोचित यथायोग्यमन्यस्याग्रे वदति स निसृष्टार्थः । यथा पाण्डवानां
दूतो वासुदेव । यावत्सदिष्टवक्ता मितार्थ । शासनहार प्रसिद्ध । दूत प्रत्याह ( १२।६८ )
" नाविज्ञात पुरे शत्रो प्रविशेच्च न ससदि । कालमीक्षेत कार्यार्थमनुज्ञातश्च निष्पतेत् ॥"
निष्पतेदुपविशेत् ।
" सारवत्ता च राष्ट्रस्य दुर्ग तद्गुप्तिमेव च । छिद्र शत्रोर्विजानीयात्कोशमित्रबलानि च ॥
" उद्यतेष्वपि शस्त्रेषु यथाक्त शासन वदेत् । रागापरागौ जानीयात्प्रकृतीनां च भर्तरि ॥
" फलेन नाम्ना द्रव्येण कर्मणा च महीयसा । कुर्याच्चतुर्विध स्तोत्र पक्षयोरुभयोरपि ॥ ( ११ )
" तीर्थाश्रमपुरस्थाने. शास्त्रविज्ञानहेतुना । उपासन्यं जनोपेतै स्वचरै. सह सवदेत् ॥ ( १३ )

---

१ रथवनअटाई—विना—निम्न ग्रा-विनग्रा क्ष—पाठ क्ष—श । २ अभ्यस्तकर्मानृपते । ३ तीर्थाश्रमाश्रय । ४ तपस्वि ।

"प्रतापं कुलमैश्वर्यं त्यागमुत्थानसौष्ठवं । अक्षुद्रतां च दाक्ष्यञ्च भर्त्तुः सर्वत्र कीर्त्तयेत् ॥ ( १४ )
"सहेतानिष्टवचनं कामं क्रोधं च वर्जयेत् । वैतसीमाश्रयेद्वृत्तिं नान्यवृक्षाश्रिता सदा ॥ ( १५ )
"नान्यं शयेभ्र भावं स्वं वदेद्विषात्परस्य च । भावमंतर्गतं गुप्तं सुप्तो मत्तश्च भाषते ॥
"तस्मादेकः स्वपेन्नित्यं स्त्रीमद्ये च विवर्जयेत् ॥
"राष्ट्राटव्यतपालानामात्मसात्करणं तथा । युद्धापसारभूज्ञानं दूतकर्मेति कथ्यते ॥ ( २३ )
दूतेनैव नरेंद्रस्तु कुर्वीतारिविमर्षणं । स्वपक्षे च विजानीयात्परदूतविचेष्टितं ॥ " ( २४ )
इद कर्म निसृष्टार्थस्यैव । चरा उक्ता नीतिसारे ( १२।२६–२५ )
"तपस्विलिंगिनो धूर्त्ता पण्याशिल्पोपजीविनः । चराश्चरेयुः परितः पिबन्तो जगतां मनः ।
"निर्गच्छेयुर्विशेयुश्च सर्ववार्त्ताविदोऽन्वहं । सूक्ष्मसूत्रं हि चारेण पश्येद्विविधचेष्टितं ॥
"स्वपन्नपि हि जागर्त्ति चारचक्षुर्महीपतिः ॥
"विवस्वानिव तेजोभिर्नभस्वानिव चेष्टितैः । राजा चरैर्जगत् कृत्स्नं व्याप्नुयाल्लोकसंमते ॥
"एतेशंयास्तु सचाराः सर्वे नान्योन्यवेदिनः । प्रकाशश्चाप्रकाशश्च चरस्तु द्विविधः स्मृतः ॥
"अप्रकाशोऽयमुद्दिष्टः प्रकाशो दूत इष्यते ॥ " तथा ( १२।४२–४३ )
"जडमूकांधबधिरच्छान्नषण्ढकास्तथा । किराता वामनाः कुब्जास्तद्विधा ये च कारवः ॥
"भिक्षुकाश्चारणा दास्यो नानाकार्यकलाविदः । अतः पुरगतां वार्त्तां आहरेयुरलक्षिताः ॥
"छत्रव्यजनभृंगारयानवाहनधारिणः । महामात्राबहिर्वार्त्तां विद्युरन्ये च संगताः ॥
"सूदा व्यंजनकर्त्तारः कल्पकाः सूचिकास्तथा । प्रसाधका भोजकाश्च गात्रसंवाहका अपि ॥
"जलताम्बूलकुसुमगंधभूषणदायकाः । कर्त्तव्यं वशगा ह्येते ये चान्ये न्यासवर्त्तिनः ॥ "
इति दूतचारप्रपंच । अथ प्रयाणे योधस्वरूपमाह मिहिरः
"शूरकृतास्त्रमहाकुलजाता स्वामिहिता बलिनः कृतयशाः ।
"हृष्टगुणा बहुबान्धवमित्रा नामकरोरुभुजाः कठिनांगाः ।
"व्याघ्रमृगेश्वरगोवृषनादाः श्येनदृशः शुकसन्निभनासाः ।
"केकरजिह्मनिमीलितनेत्राः पुण्यकृताः समरेषु सहायाः ॥
"देशगुणैः प्रथिताश्च पुरोगास्ते बहवो गुणलक्षणलक्ष्याः ।
"काकभृतो भ्रुकुटीकृतवक्त्रा धर्मभृतो विविधायुधहस्ताः " ॥ अथ प्रयाणे विशेषो योगयात्रायां
"अतः पुराद्वा स्वनिवेशनाद्वा सिंहासनाद्वापिपरिस्तराद्वा ।
"कुर्यान्नरेंद्रः प्रथमं प्रयाणं विप्रैः शताग्रैः कृतमंगलाशीः ॥
"द्विजो विष्णुक्रमाद्भूपं मंत्रेणानेन शापयेत् । इदं विष्णुर्विचक्रमे इति पादं समुद्धरेत् " ॥
अमुकस्य वधाय दक्षिणं क्षितिपो न्यसेत् ।
"मंगलानि ततः पश्यन्स्पृशन् शृण्वन् नृपो व्रजेत् " ॥ अथ दर्शनशकुनं वराहमिहिरः
"वाचः शुभाः सारसचाषबर्हिणः कादंबहंसाश्च सजीवजीवकाः ॥
"काकश्च पक्वाक्तवराहपृष्ठगो श्रीवृक्षबालव्यजनानि चंदनम् ॥ " शुभा वाचो ब्राह्मणानामिति पूर्वेणान्वयः ।

---

१ सन्तापं । २ कारका । ३ प । ४ क्ष पाठ ।

“ दधिमधुघृतरोचना कुमारी ध्वजकनकाम्बुजभद्रपीठसिंहा ।
“ सितवृषकुसुमाम्बराणि मीनद्विजगणिकातंजनाश्च चारुवेषा ॥
“ ज्वलितशिखिफलाक्षतेक्षु भक्ष्यद्विरदमृद कुशचामरायुधानि ।
“ मरकतकुरुविंदपद्मरागा स्फटिकमणिप्रमुखाश्च रत्नभेदाः ॥
“ स्वयमथ रचितान्ययत्नतो वा पथि यदि कथितानि भवति मंगलानि ।
“ स जयति सकला ततो धरित्री ग्रहगणमंगलभनश्रुतेरुपास्या । ”
इद मगल माङ्ग द्रष्टव्य स्प्रष्टव्य श्रोतव्य चेत्यर्थ । अनिष्टफलान्युक्तानि तेनैव
“ कार्पासौषधकृष्णधान्यलवणक्षीबास्थितैल वशायकागारगुडाहिद्कर्शकृत केशायत व्याधिता ।
“ वातान्मत्तजडेंधनास्तणतुषक्षुत्क्षामतक्रारया मुण्डाभ्यक्तविमुक्तकेशपतिताः काषायिणश्चाशुभा ॥
यानदिने क्षौराभ्यगवर्जन तु ज्योति शास्त्रे ज्ञेय । एव मगलामगलाभिन्नदर्शनानिष्ट नापीष्टलाभ
इति ज्ञेय । देशविशेषे विशेषमाह
“ छुछुन्दरी शूकरिका शिवा च श्यामारला पिंगलिकाऽन्यपुष्टा ।
“ वामा प्रशस्ता गृहगोधिका च पुसज्ञका ये च पतत्रिणश्च ॥ तथा
“ श्येनो रुरु पूर्णकुट. कपिश्च श्रीकर्णछिक्कारकचिप्पिकाजा ।
“ स्त्रीस ज्ञिता ये च शिखिद्विपौ च यान हिता दक्षिणभागसस्था ॥
“ आस्फोटिताऽक्ष्वेडितशस्ततूर्यपुण्याहवेदध्वनिगीतशब्दा ।
“ वामा प्रयाण शुभदा नराणामाक्रादेत दक्षिणत परेषा ॥
आस्फोटित मल्लयुद्ध । आक्ष्वेडित मुखशब्द ।
“ भारद्वाज्यजबर्हिचाषनकुला सकीर्त्तनाद्दर्शनात्कौशतश्च शुभप्रदानसरटो दृष्ट शिवाय क्वचित् ।
“ गोधाशूकरजाहकाहिशशका पापारुतालाक्वने धन्य कीर्त्तनमृक्षवानरकल तत्रास्यैयाच्छोभनं ॥
नकुलस्य मृगस्य पक्षिणा वामोद्दक्षिणभागसेचन शुभद । श्वशृगालयोरिद्व व्यत्ययेन फलद प्रशस्यते ।
“ चाषो नकुलश्च वामभागौ दिवसार्द्धात्परत शुभप्रदौ ।
“ मृगवच्च वनेषु कुक्कुरा शतपत्रोऽतमये च दक्षिण ”॥ क्वचिदपवादमाह
“ निरुपहतमनोज्ञवृक्षसस्था शुचिरुचिरावनिसस्यसंस्थिताश्च ।
“ अतिथिदिवसर्क्षलग्नकालेऽशुभफलाऽपि शुभप्रद प्रदिष्ट ॥
“ प्रभग्नशुष्कद्रुमकटकेषु श्मशानभस्मास्थितुषाकुलेषु ।
“ प्राकारशून्यालयदुर्दशेषु सौम्योऽपि पाप शकुन प्रकल्प्य ” ॥ तथा
“ दुर्द्दार्न्नरोगार्दितभीतमत्तवैरार्त्तयुद्धाभिषक्ताक्षिणश्च ।
“ समीतनयतरिताश्च सर्वे न चिंतनीया सदसत्फलेषु ” ॥ इति प्राणिशकुन ।
**अथाप्राणिन** । स एव
“ रिक्तोनुकूलः कलशो जलार्थमभ्युद्यत सिद्धिकर प्रयाणे ।
“ विद्यार्थिना चौर्यसमुत्थिताना वणिक्क्रियाभ्युद्यमिनामतीव । ” विशेषमाह

---

१ क्ष—म । २ क्ष—चम । क्ष—पाठ । ४ घ—सिद्धार्थिना ।

" यान धुरेण रहित बृहती च कन्या गर्भेण चातिमहता पुरतः स्थिता स्त्री ।
" आगच्छ तिष्ठ विश गच्छसि वा किमर्थं शब्द' स्थिरश्च गमन प्रतिषेधयति " ॥ क्षुते आह
" सर्वत्र पाप क्षुतमुद्दिशति गोस्तु क्षुत मृत्युकर थियासो. ।
" मार्जाररावस्खलनं च यातुर्वस्त्रस्य भंगश्च न शोभनाय " ॥ तथा
" द्रव्याणि शुक्लानि तुरगमश्च पूर्वेण याम्येन शव च मांस ।
" पश्चात्कुमारी दधि चातिशस्त सौम्येन गोब्राह्मणसाधवश्च " ॥ तथा
" काकं' शुभो दक्षिणतश्च तेषामन्येषु देशेषु विपर्ययेण "। पूर्वदेशे दाक्षिण' काक शुभ अन्यस्मिन्वाम इत्यर्थ । तथा
" क्रोशादूर्ध्वं शकुनविरुत निष्फलं प्राहुरेके तत्रानिष्ट प्रथमशकुने मानयेत्पञ्च षट् च ।
" विंशो यामान्नृपतिरशुभे षोडशे वा द्वितीये प्रत्यागच्छेत्स्वभवनमिति यद्यनिष्टस्तृतीय " ॥
प्रयाणे प्रथम यत्राशकुनं जात तत्रैव स्थित्वा एकादशयामानतिवाहयेत । पुन प्रस्थाने यद्यशकुन तत. षोडश । ततोऽप्यशकुने गृहे आगमन । एव शकुनानि ग्रहबलादीनि वीक्ष्य राजा स्वय यायात् । स्वस्य ग्रहाद्यानुकूल्याभावे तद्वत यशस्विनममात्यं जयार्थं प्रेषयेत् । यथोक्त योगयात्रायां
" शत्रोर्वधाय सचिव शुभदैवयुक्तं आज्ञापयेन्नृपतिरात्मनि दैवहीने " इति ।
ग्रहाद्यानुकूल्य ज्योति शास्त्रादवगन्तव्य । अथ **स्कधावारस्थल नीतिसारे**
" यायाद्वैरिपुराभ्याशे भूभागे साधुसमते । स्कधावारविशेषज्ञ स्कधावार निवेशयेत् ॥
" भूमिप्रवेशे सामर्थ्यादगारमुपकल्पयेत् । गुप्त स्वच्छ पुराकार महाद्विपसमावृत ॥
" पार्ष्णिग्राहेण शुद्ध च रथपत्तिसमावृत । तन्मध्ये मानसालहादि महन्मौल नलावृत ॥
" अंत कोशग्रहोपेत कारयेद्राजमन्दिर । मौलभूतश्रेणिसुहृद्द्विषाटविक बल ॥
" राजहर्म्यं समावृत्य क्रमेण विनिवेशयेत् ।
" अंते श्वगणिन' शूरान् लुब्धकान् दुष्टकर्मण । पर्याप्तवेतनानाप्तान्मडले विनिवेशयेत् ॥
" हस्तिनो लब्धनामानस्तुरगास्तु मनोजवा । गृहोपकंठे नृपतेर्वसेयु. स्वाप्तरक्षिता ॥
" युद्धयोग्यो महामत्री सन्नद्ध साध्वधिष्ठित' । तिष्ठेन्नरपतेर्द्वारि वेगवाश्च तुरगम ॥
" निशितान्यो बहिर्गच्छेद्गच्छेच्चेद्द्वारिवारित । सज्जोपकरण तिष्ठत्सर्व कार्योन्मुखो जन ॥ तथा
" बहिश्च खातान्सछन्नान् तृणैरुपरि सवृतान् । परसैन्यविघातार्थं सर्वा भूमिं विनाशयेत् ॥
" क्वचित्कटकशाखाभि क्वचित्कीलैरयोमुखै । दूषयेत्परितो भूमि प्रच्छदपवरैरपि ॥
" निगूढक्षुपपाषाणस्थाणुवल्मीकनिन्हुता " ॥ उत्तममध्यमभेदास्तत्रैव
" यस्मिन्देशे यथाकाल सैन्यव्यायामभूमय । परस्य विपरीताश्च स्मृतो देश स उत्तम ॥
" आत्मनश्च परेषा च तुल्यव्यायामभूमय । यत्र मध्यम उद्दिष्टो देश शास्त्रार्थचिंतके ॥
" अरातिसैन्यव्यायामसुपर्याप्तमहीतल' । आत्मनो विपरीतश्च स वै देशोऽधम' स्मृत' ॥
स्कधावार विशिनष्टि **कामंदकः**
" दिव्यांतरिक्षैरुत्पातैः पार्थिवैश्चाप्यदूषित. । नीचै प्रवृत्तपवनो मृगालीततमगल. ॥
" 'हृष्टपुष्टजनः साधु सुगधिज्वलितानन' । इत्यादिलक्षणोपेत स्कधावार प्रशस्यते ॥
" शस्ते तस्मिन्द्विषो भंगो ज्ञेयोऽन्यस्मिन्विपर्यय "॥ शकुनाद्युपेते जयोऽशकुनाद्युपेते भग इत्यर्थः।

---

१ ह—काल । २ ह—श । ३ ह—यु ।

**सेनापतिरुक्तो नीतिसारे**

" कुलोद्भूत जानपदं मन्त्रज्ञ मन्त्रिसमत । दण्डनीते प्रयोक्तार अध्येतार च यत्नत. ॥
" प्रभावोत्साहसपन्नमाजीव्यमनुजीविना । नित्याकारणवैराणामकर्त्तारमनाविल ॥
" श्रुतानुबन्धिकर्माणमल्पामित्र बहुश्रुत । गजाश्वरथचर्यासु शिक्षितं त्यागिन सहं ॥
" युद्धभूमिविभागज्ञ सिंहवद्दृढविक्रमम । अदीर्घसूत्र निस्तन्द्रममर्षणमनुद्धत ॥
" हस्त्यश्वरथशास्त्राणा सम्यक्लक्षणवेदिन । देशभाषास्वभावज्ञ लिपिज्ञ सुहृढं स्मृतं ॥
" निशाप्रचारकुशल कुशलज्ञाननिश्चित । दिग्देशमार्गविज्ञानसंपन्न तद्‌ज्ञसेवितं ॥
" क्षुत्पिपासाश्रमत्रासशीतवातोष्णवृष्टिभि. । अनाहितभयग्लानिशत्रुपक्षभयावह ॥
" भेत्तार परसैन्याना दुःसाध्याहितनिश्चय । भग्नाना च स्वसैन्याना अवष्टंभस्य कारकं ॥
" चरदूतप्रचारज्ञं महारम्भफलोपग । शश्वत्संसिद्धकर्माण सिद्धिकर्मनिषेवित ॥
" इत्यादिलक्षणोपेत कुर्वीत ध्वजिनीपति" ॥ तस्य कृत्यमुक्त ।
" ध्वजिनीं च सदोयुक्त स गोपायेद्दिवानिश ॥
" नद्यद्रिवनदुर्गेषु यत्र यत्र भय भवेत् । सेनापतिस्तत्र तत्र गच्छेद्व्यूहीकृतैर्बलै ॥" व्यूहस्तु मकरश्येनसूचीशकटवज्रसर्वतोभद्रभेदात् षोढा । तेषा विनियोग उक्तो **महाभारते**
" यायाद्व्यूहेन महता मकरेण पुरोभये । श्येनेनोभयपक्षेण सूच्या वा वीरवक्त्रया ॥
" पश्चाद्भये तु शकट पार्श्वयोर्वज्रसंज्ञित" । अन्ये च गरुडादयो व्यूहभेदा नोक्ताः । तेषामेष्वेवान्तर्भावात् । " सर्वतोभद्र भये व्यूह प्रकल्पयेत ॥ "

**रचनोक्ता नीतिसारे**

" नायक पुरतो यायात्प्रवीरपुरुषावृतः । मध्ये कलत्र कोशश्च स्वामी फल्गु च यद्धनं" ॥
नायक सेनापति. । फल्गु अन्नादि । तद्रक्षणीयमित्यर्थ ।
" पार्श्वयोरुभयोरश्वा वाजिना पार्श्वयो रथा । रथाना पार्श्वयोर्नागा नागानां चाटवीबल ॥
" पश्चात्सेनापति सर्वं पुरस्कृत्य कृती बल । यायात्सन्नद्धसैन्यौघं खिन्नांश्चाश्वासयन् जनान् ॥"
पूर्वं सेनापतेरग्रे यानमुक्त अधुना पश्चाद्यान । अतो ज्ञायते अग्रे याता पश्चाद्याता चेति सेनापतिद्वयमिति । इति सेनापतिव्यूहनिरूपण । अथ कूटयुद्धेन शत्रुमारणसमय उक्तो **नीतिसारे**
" दीर्घाध्वनिपरिश्रात क्षुत्पिपासाहतश्रम । व्याधिदुर्भिक्षमरकै पीडित दस्युविद्रुतं ॥
" घोराग्निभयवित्रस्त वृष्टिवातसमाहत । पङ्कपांशुजलस्कन्धव्यस्तं श्वासातुरं तथा ॥
" प्रसुप्त भोजने व्यग्रमभूमिष्ठमसस्थित । एवमादिषु जातेषु व्यसनेन समाकुल ॥
" स्वसैन्य साधु रक्षेत परसैन्य च घातयेत् । विशिष्टो देशकालाभ्या युक्त प्रकृतिभिर्बलै ॥
" कुर्यात्प्रकाशयुद्ध च कूटयुद्ध विपर्यये" । कूटयुद्ध नामविषाक्तशस्त्रादिना घातन लोके प्रसिद्ध किंचिदुक्त **नीतिसारे**
" पुरस्ताद्विषमे देशे पश्चाद्धन्यात्तु वेगवान् । जितिमेव यविश्वस्त हन्याच्छत्रु व्यपाश्रितः ॥
" क्लिष्टोऽप्यापि परानीकमप्रमत्तो विनाशयेत । अवस्करभयाद्रात्रौ प्रजागरकृतश्रम ॥

---

१ घयबनअट-लिपिष्ठ । २ क्ष-हित । ३ क्ष-पाठ ।

" दिवासुप्त समाहन्यान्निद्राव्याकुलसैनिकं ॥
" प्रातः संगवसन्नद्धमपराण्हे विनाशयेत् । निशि विस्रंमसं सुप्तं तत्सौप्तिकविधानवित् ॥
" इत्येव कूटयुद्धेन हन्याच्छत्रूनलघूत्थित । वदति सत्रमित्यादि सत्रवर्त्संप्रकीर्त्तित. ॥
" अरिनाशो महीपानां नयशास्त्रविशारद ।"
" साधु प्रमत्त व्यवसायवर्त्ती येन प्रकारेण पर निहन्यात् ॥
" चरै समावेदिततत्प्रचारः शकेत तेनैव ततोऽप्रमत्त ॥
" नियतमिति निहन्यात् कूटयुद्धेषु शत्रु न हि तिरयति धर्मं छद्मना शत्रुनाशः ।
" अचकितमिव सुप्तं पांडवानामनीकं निशि सुनिशितशस्त्रो द्रोणसूनुर्जघान ॥ "

अत्र ब्राह्मणवर्जं हन्यात् । ब्राह्मण तु स्वस्य वधार्थमायात निवारयेत् । यदा निवारणमपि कर्त्तुमशक्तस्तदा हन्यादेव । यथाह मनु ( ७।३५१–५२ )
" गुरु वा बालवृद्धौ वा ब्राह्मण वा बहुश्रुत । आततायिनमायात हन्यादेवाविचारयन् ॥
" नाततायिवधे दोषो हन्तुर्भवति कश्चनेति ।" कात्यायनोऽपि
" आततायिनमायातमपि वेदांतग रणे । जिघांसतं जिघांसीयान्न तेन ब्रह्महा भवेदिति ॥ "

अतो जिघासत एव विप्रस्य मारण न सुतरां. । अत्र विज्ञानेश्वरः मनुवाक्ये वाशब्दात्कात्यायनवाक्येऽप्यपिशब्दाच्च ब्राह्मणवधे तात्पर्यं । किंत्वेतादृशो ब्राह्मणोऽपि वध्य किमुतान्य इति कैमुतिकन्यायेनैतादृशान्यवधपरमित्याह । वस्तुतस्तु स्ववधोद्यतो ब्राह्मणोऽपि वध्य एव । पूर्वोक्तवचनयोः स्वार्थत्यागेऽसाधारणमानाभावात् ।

गालवस्तु अहनने दोषमाह
" उद्यम्य शस्त्रमायांत भ्रूणमप्याततायिन । निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेदिति "॥

आत्मघाती भवेदित्यर्थ । बृहस्पतिरपि
" स्वाध्यायिन कुले जात यो हन्यादाततायिन । अहत्वा भ्रूणहा स स्यान्न हत्वा भ्रूणहा भवेदिति" ॥
" सर्वत एवात्मानं गोपायेदिति" श्रुतिरपि । अत स्ववधार्थमागच्छन् ब्राह्मणो वध्य. । परवधार्थं गच्छन्स्वय न वध्य इति तात्पर्यं । एतत्परमेव बार्हस्पत्य
" आततायिनमुत्कृष्ट वृत्तस्वाध्यायसयुत । यो न हन्याद्वधप्राप्त सोऽश्वमेधफलं लभेदिति "॥

एवमेव चन्द्रिकाशय । यत्तु धृष्टद्युम्नस्य द्रोणवधे कुत्सन कृत । न तद्ब्राह्मणवधनिमित्तमेव किंतु न्यस्तशस्त्रवधनिमित्त । तादृशस्य ब्राह्मणस्य वधेऽन्यापेक्षया दोषातिशयात् । प्रजापीडनमुक्त भारते
" उपरुणद्धि राजानो भूतानि विविधानि च । त एव विजयं प्राप्य वर्द्धयंति पुन प्रजा ॥ "तथा
" तावत्प्रपीडयेच्च शत्रो प्रकृतय स्वय । वश जाते पुनस्तासु पितृवद्वृत्तिमाचरेत् ॥"

अथ धर्मरणमाह मनुः ( ६।८८, ९० )
" समोत्तमाधमै राजा त्व तः पालयन् प्रजा । विनिवर्त्तेत संग्रामात् क्षत्रधर्ममनुस्मरन्" ॥ तथा
" आहवेषु मिथोऽन्योऽन्य जिघांसंतो महीक्षितः । युद्ध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः"॥

योधान्प्रत्युपदेश उक्तो वराहमिहिरेण

"अभिजनयुता यूयं शौर्यं जना कथयति वो धनुषि परशौ शक्त्यां चक्रे तथैव कृतश्रमः ।
"मयि च भवतामस्ति स्नेह कथ न जयो मम द्विरदतुरगस्याद्याकात भवद्भिरिव पदा" ॥

"तथा पुराणोपदेशैश्च तान्प्रवर्तयेत् । तथाहि । ज्योतिष्टोमाद्रियज्ञै. स्वर्गावाप्तिस्तत्र च ज्ञानायनेक साधन महत्कष्टायाससाध्य ॥

तथोपासनाया पञ्चाग्न्यादितपस्सु च क्लेशादिक स्पष्टमेव । योगोऽपि वायुनिरोधनाहारनिद्राव्यायामनिरोधनादिना दु.साध्य एव । सवत्र च कीर्तने कृते पुण्यक्षय । अत' सर्वापेक्षया रणमरणमेव स्वल्पायाससाध्य साधीय । तत्र हि पापिनामपि स्वर्ग' किमुतान्यस्य । तदुक्त **योगयात्रायां** ।

"द्वैपायनेन मुनिना मनुना च धर्मा युद्धेषु ये निगदिता विदितास्तु ते व. ।
" स्वाम्यर्थगोद्विजहिते त्यजतां शरीर लोका भवति सुलभा विपुले यशश्च ॥
"तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नत सत्रिभिरिज्यया च या ।
"व्रजाति तामाशुगतिं मनास्विनो रणाश्वमेधे पशुतामुपागता ॥
"स्वर्गस्य मार्गा बहव प्रदिष्टास्ते कृच्छ्रसाध्या कुटिला. सविघ्नाः ।
"निमेषमात्रेण महाफलोर्यमृजुश्च पथाः समरे स्थसुत्वमित्यपि" ॥ तथा
"सरक्ष्यमाणामपि नाशमुपैत्यवश्य एतच्छरीरमपहाय सुहृत्सुतार्थान् ।
"तत्किं वर प्रकुपतां सुहृशां समक्ष किं निघ्नतः परबल भृकुटीमुखस्य ॥
"हा तात मातेति च वेदनार्त्तः किरन् शकृन्मूत्रकफानुलिप्त ।
"वर मृत. किं भवने किमाजौ सदष्टदन्तच्छदभीमवक्त्र" ॥ तथा
"यस्य तपो न जनाः कथयाति नो मरण समरे विजय वा ।
"न श्रुतदानमहाधनता वा तस्य भवः कृमिकीटसमानः ॥
"लोकोऽशुभस्तिष्ठतु तावदन्यः पराङ्मुखाना समरेषु पुसां ।
"पत्न्योऽपि तेषा न ह्रिया मुखानि पुरस्सखीनामवलोकयाति ॥
"शत्रुसैन्यमवदार्य वर्त्तता यत्सुख तु कथयामि तादृश ।
"शृण्वता स्वयशसोपपल्लवान् दिग्वधूवदनकर्णपूरकान् ॥
"निपतति शिरसि द्विपस्य सिंह. स्वतनुशताधिकमांसराशिमूर्तिः ।
"पिबति च तदसृङ्मदेष्टगव वदनगतांश्च शनै प्रमृज्य मुक्तान्"।

भारते इन्द्राम्बरीषसवादे इन्द्रो यज्ञत्वेन रणवर्णन कृत्वा तन्मध्ये यो मृतस्तस्य फलमाह

"भर्त्तुरर्थे तु य शूरो विक्रमेद्वाहिनीमुखे । भयान्न विनिवर्त्तेत तस्य लोका यथा मम ॥
"यश्च नावेक्षते कचित्सहायं विजये स्थित । जीवग्राह प्रगृह्णाति तस्य लोका यथा मम ॥
"आहवे निहत शूरैर्न शोचेत कदाचन । अशोच्यो हि हत शूर स्वर्गलोके महीयते ॥
"न ह्यन्नं नोदक तस्य न स्नानं नाप्यशौचकं । हतस्य कर्त्तुमिच्छाति तस्य लोकान् शृणुष्व मे ॥
'वराप्सरस्सहस्राणि शूरमायोधने हतं । त्वरमाणा प्रधावति मम भर्त्ता भवेदिति ॥
"एतत्तपश्च पुण्य च धर्मश्चैव सनातन' । चत्वारश्चाश्रमास्तस्य यो युद्धे न पलायते" ॥ तथा

“ न हि शौर्यात्परं किंचित्त्रिषु लोकेषु विद्यते । शूरः सर्वं पालयति सर्वं शूरे प्रतिष्ठितं ॥
“ चराणामचरा अन्नं अदंष्ट्रा दंष्ट्रिणामपि । अपाणय पाणिमतामन्नं शूरस्य कातराः ॥
“ समानपृष्ठोदरपाणिपादाः पश्चाच्छूरं भीरवोऽनुव्रजंति ।
“ अतो भयार्ताः प्रणिपत्य भूयः कृत्वांऽजलीनुपतिष्ठंति शूरान् ” ॥ योगयात्रायामपि
“ रुचिमत्कुचबाहुपंजरे हरिणाक्ष्यः प्रवरोरुपीडनं ।
“ रमयंति विमानसंस्थिताः सुरवध्वोऽतिमुदा रणार्चितान् ॥
“ एकतोऽस्य सुरसुंदरीजनः श्री प्रतीच्छति युयुत्सतोऽन्यतः ।
“ पाप्मना सह पलायते यशश्चैकतः कुलकलंककारकं ॥ तथा
“ चित्रं किमस्मिन्वद साहसं वा यत्स्वामिनोऽर्थे गणयति नासून् ।
“ युद्धात्प्रणष्टो विदितोऽरिमध्ये यद्वालिशास्तिष्ठति साहसं तत् ॥
“ न केवलं गात्रविभूषणानि क्षतानि शूरस्य रणे कृतानि ।
“ यशस्तरोर्मूलकृषिक्षतानि तान्येव यशस्य विभूषणानि” । भंगे जाते प्रत्यावृत्तो फलातिशयस्तत्रैव
“ भग्नेषु योधेष्ववपूर्य शस्त्राण्याजौ प्रवृत्ता व्यसवः कृता ये ।
“ ऊर्ध्वाननास्ते वाजिकृतासलोकास्तेषां विमानान्यवलोकयंति” ॥
अश्वमेधप्राप्तलोकेभ्योऽप्युत्तमं लोकं यांतीत्यर्थः ।
“ यैरश्वमेधो विहितः फले वा देवैर्द्विजैर्वा श्रुतिशास्त्रकारैः ।
“ तैरेव भग्ने प्रतिलोमगस्य पदे पदे वाजिमखः प्रदिष्टः ॥
“ समूर्छित सयुगसप्रहारैः पश्यति सुप्तप्रतिबुद्धतुल्य ।
“ आत्मानमंकेषु सुरांगनानां मंदाकिनीमारुतवीजितांगः ” ॥ यत्तु पराशरवचनं
“ द्वाविमौ पुरुषौ लोके सूर्यमंडलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखं हतः ” ॥ इति

तत्र परिव्राड्रणहतस्यापि मोक्ष इति केचिद्व्याचक्षते । युक्तं तु ‘ तमेव विदित्वाऽतिमृत्युमेती ’ त्यादिभि श्रुतिभिर्मोक्षं प्रति साधनत्वाऽगमात्रणस्य च ज्ञानसाधनत्वाभावेन “ ज्ञानानुत्पत्तेर्न मोक्ष ” इति । यत्तु वचनं तदसाधारण्येन रणस्य मोक्षफलं ब्रवीति । योगयुक्तश्चेति पदं योगे जाते ज्ञानोत्पत्तेः प्राक् मृतस्य ये लोकास्ते रणमृतस्य भवतीत्येतत्परत्वेनाप्युपपन्नं न रणमरणस्य मोक्षसाधनत्वं गमयति । योगस्य तु मुक्त्यहेतुत्वमेतेन “ योग प्रत्युक्त ” इति सूत्रे निरूपितमुत्तरमीमांसाया ।

यत्तु काशीमरणेन मोक्ष इति तत्रापि न काशीमरणं साधनं किंतु ज्ञानमेव । ज्ञानं च विशिष्टगुरोः शिवस्योपदेशाच्छीघ्रमेव जायते । इति विस्तरस्तु विस्तरभिया नेह प्रतन्यत इति दिक् ।

भगवद्गीतायामपि श्रीभगवता युद्धमेव क्षत्रियस्योत्कृष्टमुक्तं ( अ २।३१–३७ )
“ स्वधर्ममपि चावेक्ष्य न विकंपितुमर्हसि । धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥
“ यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतं । सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशं ॥

---

१ ह्रा—पा । २ ह्रा—न ।

" अथ चेत्त्वमिमं धर्म्यं सग्राम न करिष्यसि । तत. स्वधर्म कीर्त्ति च हित्वा पापमवाप्स्यसि ॥
" अकीर्त्ति चापि भूतानि कथयिष्यति तेऽव्यया । सभावितस्य चाकीर्त्तिर्मरणादतिरिच्यते ॥
" भयाद्रणादुपरत मस्यते त्वा महारथा । येषा च त्व बहुमतो भूत्वा यास्यसि लाघव ॥
" अवाच्यवादाश्च बहून्वदिष्यति तवाहिता' । निदतस्तव सामर्थ्यं ततो दु'खतर नु किं ॥
' हतो वा प्राप्स्यसि स्वर्ग जित्वा वा भोक्ष्यसे महीं । तस्मादुत्तिष्ठ कौंतेय युद्धाय कृतनिश्चय" इति॥
तथा विशेषो भारते
" गजो गजेन यातव्यस्तुरगेण तुरगम । रथिना च रथी योज्य. पत्तिना पत्तिरेव च ॥
" यथायोग्य तु सयोज्य प्रन धर्मण न हीयते " । एवमसभवे प्रकार उक्त कामंदकेन
" अश्वस्य प्रतियोद्धारो भवति पुरुषास्त्रय । प्रतिकल्पास्तु पचाश्वा विधेया कुजरस्य चेति "॥
पलायने दोषमाह मनु ( ७।९४-९५ )
' यस्तु भीत. परावृत्त' सग्रामे हन्यते परै । यत्किचिद्दुष्कृत भर्तुस्तत्सर्वं प्रतिपद्यत ॥
" यच्चास्य सुकृत किंचिदमुत्रार्थमुपार्जित । भर्त्ता तत्सर्वमादत्ते परावृत्तहतस्य च " ॥
उपदेशो योगयात्राया
" जीवतोऽपि निहतस्य वा रणे धर्म एव हि नरस्य युध्यत ।
" निश्चयात् मरण हि समरे नैव भीरुरजरामर क्वचित् ॥
" मानमात्रमवलब्य युध्यते कीटकोऽथ विहगोऽथ वा पशु ॥
" को हि नाम पुरुषस्त्यजेद्रण स्वर्गमानसुखकीर्त्तिवित्तद " ॥ नारायणोऽपि ( वे सं ३ )
" यदि समरमपास्य नास्ति मृत्योर्भयमिति युक्तमतोऽन्यतः प्रयातु ।
" अथ मरणमवश्यमेव जतो किमिति मुधा मलिन यश कुरुध्वमिति"॥अवध्यानाह मनु (७।८।९)
" न च हन्यात्स्थलारूढ न क्लीब न कृताजलि । न मुक्तकेशमासीन न तवास्मीतिवादिन ॥
" न सुप्त न विसन्नाह न नग्न न निरायुध । नायुध्यमानं पश्यत न परेण समागत ॥
" न भीत न परावृत्त सता धर्ममनुस्मरन् " ॥ राजधर्मेषु
" वृद्धो बालो न हतव्यो नैव स्त्री नैव च द्विजः । तृणपूर्णमुखश्चैव तवास्मीति च यो वदेत्"॥ शख
" न पानीय पिबत न भुजान नोपानहौ प्रमुचत नावर्माण सवर्मा न स्त्रिय न करेणु न वाजिन
न सारथि न दूत न ब्राह्मणं न राजानमराजा हन्यात् " । रणे च दानमुक्त नीतिसारे
" प्रत्यग्रे कर्मणि कृते श्लाघमान कृतादरः । योधेभ्यस्तु ततो दद्यात्को हि दातुर्न युध्यते"॥तथा
" रूप्य हेम च कुप्य वा यो यज्जयति तस्य तत् । दद्याद्धस्त्वनुरूप च हृष्टो योधान्महर्षयन्निति"
इति वीरोत्साहगर्भे धर्मयुद्ध। एव राजा परराष्ट्र विजित्य ता एव प्रजाः पितृवत्पालयत् । तच्चोक्तं"॥
पूर्वमेव । अथ वीरोत्साहगर्भा निंदापरिहार । भारत युधिष्ठिरप्रश्नो भीष्म प्रति
" क्षत्रधर्मान्न पापीयान् धर्मोऽस्ति भरतर्षभ । अभियाने च युद्धे च राजा हति महाजन ॥
" अथ स्म कर्मणा केन लोकान् जयति पार्थिव । विद्वन् जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥

भीष्मवचन
" निग्रहेण च पापाना साध्वनुग्रहणेन च । यज्ञैर्दानैश्च राजानो भवति शुचयोऽमलाः ॥
" उपरुधंति राजानो भूतानि विजयार्थिनः । त एव विजय प्राप्य वर्द्धयति पुन. प्रजाः ॥
" अपाविध्यति पापानि दानयज्ञतपोबलै । अनुग्रहेण भूताना पुण्यमेषां विवर्द्धते ॥

“एवं शस्त्राणि मुञ्चतो घ्नति वध्याननेकधा । तस्यैषा निष्कृतिर्दृष्टा भूतानां भावनं पुनः ॥
“यो भूतानि धनाज्ज्यात्या वधात्क्लेशाच्च रक्षति । दस्युभ्यः प्राणदानाच्च स धर्मः सुखदो विराट् ॥
“स सर्वयज्ञैरीजानो राजाथाभयदक्षिणैः । अनुभूयेह भद्राणि प्राप्नोतींद्रसलोकताम् ॥
“ब्राह्मणार्थे समुत्पन्ने योऽभिनिःसृत्य युद्ध्यते । आत्मानं यूपमुत्सृज्य स यज्ञोऽनन्तदक्षिणः ॥
“अभीतो विकिरन् शत्रून् प्रतिगृण्हन् शरांस्तथा । न तस्मात्रिदशाः श्रेयो भुवि पश्यति किंचन ॥
“यस्य यावंति शस्त्राणि तनुं भिंदंति संयुगे । तावतः सोऽश्नुते लोकान् सर्वान्कामदुघो क्षयान् ॥
“यदस्य रुधिरं गात्रादाहवेषु प्रवर्त्तते । स हतेनैव रक्तेन सर्वपापैः प्रमुच्यते ॥
“यानि दुःखानि सहते व्रणानामभिपातने । न तपोभिस्ततो भूय इति धर्मविदो विदुः ” ॥ तथा
“पतत्यभिमुखः शूरः पराङ्भीतः पलायते । आस्थाय स्वर्गमध्वानं सहायान्विषमे त्यजेत् ॥
“मा स्म तांस्तादृशांस्तात भरिष्ठाः पुरुषाधमान् । ये सहायान् रणे हित्वा स्वस्तिमतो गृहान्ययुः ॥
“अस्वस्ति तस्मै कुर्वंति देवा इंद्रपुरोगमाः । त्यागेन यः सहायानां स्वप्राणांस्त्रातुमिच्छति ॥
“सहन्युः काष्ठलोष्टैर्वा दहेयुर्वा कटाग्निना । पशुवन्मारयेयुर्वा क्षत्रिया य ह्यनीदृशाः ” ॥
अनीदृशः । अभीरवः शूरा इत्यर्थः ।
“अधर्मः क्षत्रियस्यैष यच्छय्यामरणं भवेत् । विसृजन् श्लेष्मपित्तानि कृपणं परिदेवयन् ॥
“अविक्षतेन देहेन प्रलयं योऽधिगच्छति । क्षत्रियो नास्य तत्कर्म प्रशंसंति पुराविदः ॥
“न गृहे मरणं तात क्षत्रियाणां प्रवर्त्तते । शौंडीराणामशौंडीरमधर्मं कृपणं च यत् ॥
“रणेषु कदनं कृत्वा ज्ञातिभिः परिवारितः । तीक्ष्णैः शस्त्रैः सुनिर्भिन्नः क्षत्रियो वधमर्हति ॥
“शूरो हि सत्वमन्युभ्यामाविद्धो युद्ध्यते भृशम् । कृत्यमानानि गात्राणि परैर्नैवावबुध्यते ॥
“ससंख्ये निधनं प्राप्य प्रशस्तं लोकपूजितम् । स्वधर्मं विपुलं प्राप्य शक्रस्येति सलोकताम् ॥
“यत्र तत्र हतः शूरः शत्रुभिः परिवारितः । अक्षयान् लभते लोकान् यदि दैन्यं न भाषते ” ॥
इति वीरोत्साहमर्मोविचिकित्सापरिहारः । अथ क्रीडा
“नृपाहृता राजनीतिमुक्ता शंकरनंदनः । श्रीनीलकंठो वदति क्रीडां बुद्धिबलाश्रिताम् ॥
“पटे फले वा भुवि वाऽथ कार्यं प्रागग्रेरवानवकं तथैव ।
“उदग्दिगप्रं नवकं समानमेव चतुःषष्टिपदं हि तत्स्यात् ॥ १ ॥
“कोणेष्वथो हंसपदैस्तदंकयेत्तत्पंक्तिगा दिक्षु पदद्वयं द्वयम् ।
“मध्ये चतुष्कं च समंक्य तत्र स्थाप्यं च सग्रामिकसैन्ययुग्मम् ॥ २ ॥
“अंत्येष्वष्टपदेषु मध्यपदयो राजा च मंत्री तयोरुष्ट्रौ पार्श्वगतौ तयोरपि तथा वाहौ तयोर्दंतिनौ ।
“तदग्राग्रपंक्तिगाष्टसुमिता स्थाप्या बुधैः पत्तयः स्थाप्यं चाप्यपरत्र सैन्यमुभयं चैव रणायोद्यतम् ॥ ३ ॥
“राजा दिक्षु विदिक्षु चाष्टपदगो मंत्री विदिङ्मात्रगश्चैकैकं क्रमतस्तु शृंखलतया मध्यं विहायापरम् ॥
“वाजी विकपदस्ततो विदिग्गतपदेष्वष्टस्वथो कुंजरः पंक्तौ सर्वपदेष्ववक्रगतिमान् पत्तिः पुरो गच्छति ॥ ४
“एकैकं विनिहंति वक्रगमनेनैव पदे घातिमे प्राप्तो मंत्रविशेष जायत इतो वृत्तः पदे पूर्वगे ॥
“अंते हंसपदे स चेदुपगतस्तत्रैव मंत्री भवेन्नोपूर्वं परिवर्त्तने न कथिता भाषेह सम्यक् क्रमात् ॥ ५
“अनावृत्तिपरावृत्तिभिन्ना क्रीडा द्विधेष्यते । पदतत्स्थाप्यभेदेन तत्राप्याद्या द्विधा मता ॥ ६ ॥

" सचिवाग्रगतौ तत पदाती सचिवौ तावनु तत्र चालनीयौ ॥
" पदयुग्ममितीह संप्रदाय पन्नगोन्योऽपि परै प्रवर्त्यतेऽत्र ॥ ७ ॥
" गतागते हयोष्ट्रयोर्न चातरानिवर्त्तक. । पुरःस्थिता हयाग्रयो गजस्य ते निवर्त्तकाः ॥ ८ ॥
" मंत्रिण' पृष्ठकोणस्थौ स्याप्यौ पत्ती स्थिरावुभौ । तथा क्रमेलकस्यापि पश्चाच्छृङ्खलगावुभौ॥९॥
" व्यूहद्वयमिद चक्रव्यूहवत्परमारण । द्वित्रिप्रकारोग्रमन दुरोत्सश प्रकीर्त्तितः ॥ १० ॥
" परस्य राज्ञोभिमुख द्विप संस्याप्य मध्यत ।स्वीयान्यस्यापसरणात्कोटीश स प्रकीर्तितः॥११॥
" न साधामिक कोपि सस्थापनीयो विना सश्रय सश्रयो नीच इष्ट' ।
' न वै संश्रयो भूपतेरन्य इष्टो न वा मारण भूपतेस्त्विष्टमेव ॥
" सरोधन राजजयो मतोऽत्र तदर्द्धतैकाकितया प्रदिष्टा ।
" सा चेत्त्वतु षष्टिमिता क्रमेण स्युर्यस्य सोऽप्यत्र पराजित' स्यात् ॥
" विरुद्धराजाशयुतो न चेत्स्यात् न चास्य पक्षे गतिमान् द्वितीय ।
" प्रमापयेत्सोऽथ विपक्षपक्षे समीपग स्वस्य निरोधनक्षम ॥
" निरुध्यमानस्य नृपस्य सार्थे शिष्येत यत्रैकतरस्तदैव ।
" तत्क्रीडक स्वगणयेत्प्रतीयास्तेष्वात्मनो द्वावथ तान् द्विनिघ्नान् ॥
" कृत्वा तदङ्कान् गणयेत्प्रतीपक्रीडाश्वतु षष्टिमिता' स हीन ।
" तन्मध्य एवास्य पराजयः स्यात्ततोऽधिकोऽसौ विपरीतकश्च " ॥ १६ ॥
अथाश्वस्य चतु षष्टिपदगमनप्रकार. । सिहलद्वीपराज. श्लोकौ
सिनहीवनिवप्रज्ञापाकश्रीदेमनोविल । वाहलइमहुनंततिमेपेतुणपधाजिकु ॥
" श्रीसिहणमहीपालमेधाविकुलक बहु । पदेन वाजिनो ज्ञान चलन प्रतिवेश्मनि " ।
अत्र चतुःषष्टिपद मडल कृत्वा तत्र नैर्ऋतीमारभ्य सिनहीत्यादि श्लोकाक्षराणि लिखित्वा पुनस्तान्यैवेशानीतो लिखित्वा श्रीसिहणेत्यादि श्लोकाक्षराणि वाचयन्नश्व नयेत् । इति ।
अथ तातचरणाना श्लोकौ
" निनाशत्रिशमेजह्नकछन्नभिपणाश्वसारावेिरोतिषभूरानिवाऽग्रवेहाष्टिहयगे ।
" नारायणाह्वरामेशभुजनि प्रतिसद्मनि । निनाय शकरो वाह स्वगेहात्सत्रिषष्टिभित् ॥
अथ मामक. प्रकार
"आद्य वस्वेकमष्टाद्रिशिखिविधुपद वन्हिज नदिसश नदैक पचयुग्म शरहरनयन खाघुग त्रित्रिशुक्र ॥
"अश्वाद्व्योमचद्र युगमितमुद्धुराडक्षिषट्त्रिपचोपात्स्येवस्वब्धिभूमिज्वलनमुवधिकुवेरदत्रिद्विपख ।
" षट्चद्र नेत्रयुग्म मुनिजमुदधिदृङ्गद्वन्ह्याशुगाब्धिव्योमसर्वर्षिषुवेत्य पुनरनयदितो वाजिन नीलकठ ।

इतिश्रीजगद्गुरुनारायणभट्टसूरिसूनुपडितशिरोरत्नमीमांसाद्वैतसाम्राज्यधुरधरभट्टशकरात्मजभट्ट-
रंगनाथदामोदरनृसिंहानुजभट्टनीलकण्ठेनकृते भास्करे नीतिमयूखः समाप्तः ॥

---

१ ट—कोटीश ।

# एतत्पुस्तकोद्धृतऋषिवचनाना ऋषीणां च अकाराद्विवर्णतः सूची ।

## २ श्रुतिवचनानि.

### अथर्ववेदसंहिता.

